निश्चयत्र निवेशनीयम् । तथाच लौकिकसन्निकर्षाजन्यदोषविशेषाजन्य-तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्न-तद्धर्मावच्छिन्नप्रकारताशालिबुद्धिं प्रति तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्न-तद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्ता "अनाहार्याप्रामाण्यज्ञानानास्कन्दित" निश्चय, तादृशाभावव्याप्यवत्तानिश्चयश्च प्रतिबन्धक इति फलितम्, प्रतिबध्यताप्रतिबन्धकतावच्छेदकयोः सम्बन्धः समवायात्मकोऽवसेय । एवञ्च लौकिकसन्निकर्षाजन्यदोषविशेषाजन्येन्द्रियमनोनिमित्तविज्ञानत्वावच्छिन्नविशेष्यतानिरूपित-समवायसम्बन्धावच्छिन्नप्रत्यक्षत्वावच्छिन्नप्रकारताशालिबुद्धिं प्रति इन्द्रियमनोनिमित्तविज्ञानत्वावच्छिन्नविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नाप्रत्यक्षत्वावच्छिन्नप्रतियोगिताकानाहार्याप्रामाण्यज्ञानानास्कन्दितस्य 'इन्द्रियमनोनिमित्तविज्ञानं प्रत्यक्षम्' इत्याकारकस्य प्रत्यक्षात्मकनिश्चयस्य प्रतिबन्धकत्वादित्याशङ्का मनसि निधायाह—

२-( सूत्रम् ) न प्रत्यक्षादिविरोधिनी प्रतिज्ञा, अस्य साक्षात्सम्पूर्णवस्तुपरिच्छेदायोगात्, अनीदृशस्य च प्रत्यक्षत्वानुपपत्तेः ॥

इन्द्रियमनोनिमित्तं विज्ञानमप्रत्यक्षम् इतीयं प्रतिज्ञा प्रत्यक्षादिविरोधिनी न भवितुमर्हति, अस्य-इन्द्रियमनोनिमित्तस्य विज्ञानस्य साक्षात् सम्पूर्णवस्तुपरिच्छेदानात्मकत्वात् साक्षात् सम्पूर्णवस्तुपरिच्छेदात्मकमेव विज्ञानं प्रत्यक्षमुच्यते, अनीदृशस्य असाक्षात्सम्पूर्णवस्तुपरिच्छेदात्मकस्येन्द्रियमनोनिमित्तस्य विज्ञानस्य प्रत्यक्षत्वानुपपत्तेरित्युक्तप्रतिबध्यप्रतिबन्धकभावाप्रसक्तेः । तथाचेयं प्रतिज्ञा

न प्रत्यक्षविरोधिनीति फलितम् । प्रत्यक्षादीत्यत्राऽऽदिपदेनानु
मानादर्ग्रहणम् । तथा चानुमानादिविरोधाऽन्यथा प्रतिज्ञाया
निवारितो बोद्धव्य , विरोधिनोऽनुमानादेरनवकाशादिति भाव ।।२॥

३-( मूलम् ) नासिद्धो हेतु धर्मिधर्मत्वात्, यथोदितविज्ञानस्य हि ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मत्व, स्वभावतस्तथाप्रतीते , अतत्स्वभावत्वे तदनिमित्तत्वप्रसङ्गात् ॥

ननु तादृशविज्ञानात्मके पक्षे तादृग्हेतोरसत्त्वाद्धेत्वभावत्व आत्मकस्वरूपासिद्धिदोषाक्रान्त्याऽसिद्धत्वेन " ह्रदो द्रव्य धूमात् " इत्यादाविव स्वरूपासिद्धिनिश्चयस्य परामर्शविरोधित्वेऽन्द्रियमनोनिमित्तविज्ञानपक्षकाऽप्रत्यक्षत्वसाध्यकानुमितिन स्यादिति चेत्तत्राह "नासिद्धो हेतु " इति । हेतुरसिद्धिदोषयुक्तत्वेन सव्यभिचारविरुद्धः न अनिरपेक्षासिद्धबाधितानर्गतोऽसिद्धात्मको दुष्ट इत्यर्थ । तत्र हेतुमाह-धर्मिधर्मत्वादिति, पक्षवृत्तित्वादिति हि तदर्थ । हेतो कथ पक्षवृत्तित्वमिति चेत्तत्राह-स्वभावत इति । स्वभावत —निसर्गादेव तथा तादृशपक्षगतत्वेन प्रतीत । यथोदितविज्ञानस्य-यथोदितविज्ञानात्मकपक्षस्य हि-निश्चयेन ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्व स्वभावत एवाऽऽसेयम् । तथा-इन्द्रियमनोनिमित्तविज्ञान ग्राह्यग्रहीतृव्यतिरिक्त-निमित्तोत्थापितप्रत्ययात्मकम् इति प्रतीतेदर्शनात् । यथोदितविज्ञानस्य तथा स्वभावो नाङ्गीक्रियते इतिचेत्तत्राह-अतत्स्वभावत्वे इति । यथोदितविज्ञानस्य ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वास्वभावत्वे यथोदितविज्ञाने इन्द्रियमनोनिमित्तत्वाभावप्रसङ्गात् । आश्रयासिद्धिस्वरूपासिद्धिव्या

व्यत्वासिद्धिभेदेनासिद्धिस्त्रिविधा भवत्यतो ऽसिद्धाऽऽख्यो हेतुरपि त्रिविध उच्यते । आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति । आश्रयासिद्ध्यादि यतमत्वमसिद्धिसामान्यलक्षणम् । आश्रयासिद्धिस्तु पक्षतावच्छेदकाभाववत्पक्षः, यथा काञ्चनमयपर्वतो वह्निमान् इत्यत्र काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धिः, तन्निश्चय –काञ्चनमयत्वाभाववान् पर्वत इत्याकारकः काञ्चनमयपर्वत इति पक्षज्ञाने विरोधी, तथाच पक्षघटिततयाऽनुमितौ परामर्शे च प्रतिबन्धक इति ध्येयम् । किञ्च न केवलं पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्धिः, किन्तु पक्षे पक्षतावच्छेदकाभावव्याप्य, पक्षे पक्षतावच्छेदकवदन्योन्याभाव, पक्षे तादृशान्योन्याभावव्याप्य, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभाव, पक्षतावच्छेदके पक्षतावच्छेदकताभावव्याप्य, पक्षतावच्छेदके पक्षतावच्छेदकवदन्योन्याभाव, पक्षतावच्छेदके तादृशान्योन्याभावव्याप्य, पक्षतावच्छेदकाभाववान् पक्ष, तद्व्याप्यवान् पक्ष, पक्षतावच्छेदकतावच्छेदकाभाववत् पक्षतावच्छेदकम्, तादृशाभावव्याप्यवत् पक्षतावच्छेदकम्, पक्षतावच्छेदकतावच्छेदकवदन्योन्याभाववत् पक्षतावच्छेदकम्, तद्व्याप्यवत्पक्षतावच्छेदकमित्यादिरप्याश्रयासिद्धिरवसेया विद्वद्भिः । एवञ्च यद्रूपावच्छिन्नविषयित्व पक्षतावच्छेदकप्रकारकपक्षविशेष्यकमहत्प्रतिबन्धकतावच्छेदक तद्रूपवत्त्वमिति तल्लक्षणं फलितम् । एवं यद्रूपावच्छिन्नविषयित्वं प्रकृतपक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहिमहत्त्वाऽव्यापकप्रकृतहेतौ प्रकृतहेतुतावच्छेदकप्रकारकमहत्त्वाऽव्यापकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताशालिमहत्त्वाव्यापकप्रतिबन्धतानिरूपितप्रतिबन्धकतावच्छेदकत्वं स्वरूपासिद्धिरित्यवसेयम् ॥ ३ ॥

४-(सूत्रम्) नानैकान्तिक, यथोदितविपक्षेऽभावात्, नहि केवले ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वमस्ति, तस्य तथाविधात्मार्थनिबन्धनत्वात् ॥

ननु साध्याभावाधिकरणनिरूपितवृत्तित्वात्मकव्यभिचारात्मकदोषविशिष्टेन व्यभिचारिणा हेतुनाऽनुमितिर्न भवति यथा 'द्रव्यं सत्त्वात्' इत्यादौ सत्त्वस्य द्रव्यत्वाभावाधिकरणगुणनिरूपितवृत्तिमत्त्वात् तथैव प्रकृतेऽपि हेतुर्यदि प्रत्यक्षत्वात्मकसाध्याभावाधिकरणास्मदीयप्रत्यक्षनिरूपितवृत्तितावानस्ति तदाऽसावपि व्यभिचारीति कथमनेनाप्रत्यक्षत्वानुमितिरिन्द्रियमनोनिमित्तविज्ञानात्मकपक्षविशेषिण्येतिचेत्तत्राह—नानैकान्तिक इति। निश्चितसाध्याभाववान् विपक्ष उच्यते, साध्याभावप्रकारकनिश्चयविशेष्य इति यावत्। अस्मदीयप्रत्यक्षस्य प्रत्यक्षत्वात्मकसाध्याभावप्रकारकनिश्चयविशेष्यत्वाभावात्, यश्च साध्याभावप्रकारकनिश्चयविशेष्य स्तन्निरूपितवृत्तित्वस्य प्रकृते हेतावसत्त्वेनानैकान्तिकत्वाभावात्, केवलमपि कथं न ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकमितिचेत् तत्राह—तस्येति। तस्य—केवलस्य, तथाविधस्तादृशः सर्वज्ञस्वाभाव्यात्मा तथाविधात्मा। स चासावर्थो विषयश्च तौ निबन्धनं निमित्तं यस्य तस्य भावस्तत्त्वम् तस्मात् तथेति आत्मा स्वयमेव नत्विन्द्रियादिसापेक्षमपि यत्र विषयं गृह्णाति तज्ज्ञानं केवलमुच्यते तच्च केवलं सर्वज्ञस्यैव तीर्थकृदादेर्भवति न तु यस्य कस्यचिदपीत्यवसेयम्। अनैकान्तिकत्वस्य साधारणासाधारणानुपसंहारित्वभेदेन त्रिविधत्वेऽपि साधारणत्वमेवाशङ्कित निराकृतञ्च वदितव्यम्। साधारणत्वञ्च प्रकृतसाध्ये साध्यतावच्छेदकप्रकारकसंदेहत्वाऽव्यापिका प्रकृतहेतौ प्रकृतहेतुतावच्छेदकप्रकारकसंदेहताऽव्यापिका निरूप्यनिरू

पकभावापन्नाश्वयव्याप्तिनिष्पयताशालिप्रकृतत्वव्यापिका या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्म यत्त्व फलित बोध्यम् ॥ ४ ॥

५-(मूलम्) न विरुद्धोऽपि विपक्ष एवाभावात् । इन्द्रियोपलब्धिनिमित्तमन्तराऽव्याप्त्यन्तराद्यपेक्षारूपलस्य प्रतीतिनाजितत्वात्, विशेषविरुद्धस्य तत्त्वतोऽविरुद्धत्वात्, अन्यथा सर्वत्र भावादेव च हेतुव्यवहारोच्छेदप्रसङ्गात् ॥ ५ ॥

ननु साध्याभावव्याप्यत्व हेतुनिष्ठ विरोध उच्यते यथा 'अय गौ अश्वत्वात्' इत्यादावश्वत्वनिष्ठ गोत्वाभावव्याप्यत्वमेव विरोध यत्र यत्र धूमस्तत्र तत्र वह्निरितिधूमस्य वह्निव्याप्यत्वमिव यत्र यत्र अश्वत्व तत्र तत्र गोत्वाभाव इत्यश्वत्वे गोत्वाभावव्याप्यत्वमवसेयम् । एवञ्च प्रत्यक्षत्वात्मकसाध्याभावव्याप्यत्वस्य प्रकृतहेतौ सत्त्वाद्विरुद्धेन हेतुना कथमुक्तानुमिति स्यादिति शङ्कायामाह–न विरुद्धोऽपीति प्राक्षमहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वात्मक प्रकृतो हेतुर्विरुद्धोऽपि न भवितुमर्हति, कुत इत्याकाङ्क्षायामाह–'विपक्ष एवाभावात्' इति । विपक्षमात्रवृत्तित्वाभावादित्यर्थ । विपक्षमात्र वृत्तित्व विरोध विपक्षमात्रवृत्ती हेतुरेव विरुद्ध उच्यते, गोत्वाभावप्रकारकनिश्चयविशेष्याश्वसमवेतस्याश्वत्वस्य विरुद्धत्वमभिधीयते । प्रकृते च प्रत्यक्षत्वात्मकसाध्याभावप्रकारकनिश्चयविशेष्यकेवलात्मक विपक्षवृत्तित्वाभावात्प्रोक्तहेतोर्विरुद्धत्वशङ्कालेशोऽपीति भाव ।

ननु साध्याधिकरणेऽवृत्तिर्हेतुर्विरुद्धयत्वैव प्रसिद्धतीति सर्व सम्मतम्, एवञ्च प्रकृतसमव्याप्तहेतोर्विरुद्धत्वमितसहस्रेणाप्यशक्य

कारणम्, इन्द्रियमनःपक्ष्य केवल व्याप्तिज्ञानात्मकमान्तर कारणम पक्ष ज्ञायमानायामनुमितौ अप्रत्यक्षत्वात्मकसाध्यसत्त्वेऽपि ग्राह्य ग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वरूपहेतोरभावात्। नच ग्राह्य (विषय) ग्रहीतृ (ज्ञाता) व्यतिरिक्तत्वाद्विज्ञानात्मकनिमित्तो त्थापितप्रत्ययात्मकत्वमस्त्येवेति वाच्यम्? गुणगुणिनोरभेदस्य बहु वादिसम्मततया तथापि (व्याप्तिज्ञानस्यापि) ग्रहीत्रनतिरिक्तत्वादि त्यविदित्वाशङ्क्य निराकुरुते—इन्द्रियार्थेत्यादिना। महानसादौ वह्निधूमयोरुपलम्भानन्तरं पर्वतादौ धूमचाक्षुषादय व्याप्तिस्मरणा द्युत्तरत्राऽनुमानादरपीन्द्रियनिमित्तोत्थापितत्वादिति भाव।

अथैवमपि ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वहेतु घटकनिमित्तपदेन साक्षान्निमित्तेनोत्थापित इत्यर्थ विवक्षित तथाच अनुमानादौ साक्षादिन्द्रियनिमित्तोत्थापितत्वाभावेन ग्राह्यग्रहीतृव्यति रिक्तसाक्षान्निमित्तोत्थापितप्रत्ययात्मकत्वाभाव इत्याशङ्क्य समाधत्ते- विशेषेत्यादि-समव्याप्तत्वेन रूपेण हेतोर्विरुद्धत्वेऽपि वस्तुतया हेतु साध्ययोर्विरोधो नास्तीतिभाव। विशेषरूपेणापि हेतुसाध्ययोर्विरोध स्वीकारे समानाधिकरणयोरपि तयो विच्छिन्नरूपेण विरोधस्य सत्त्वा द्धेतुव्यवहारस्यैवोच्छेदप्रसङ्ग। वह्निधूमयोरपि महानसीयधूमत्वेन पर्वतीयवह्नित्वेन विरोधाद्धूमस्य विरुद्धत्वमापद्येत। एतदर्थ मनसि निधायाह-अन्यथेत्यादि। अन्यथा—विशेषविरुद्धस्यापि हेत्वाभासत्वे। भावादय-सत्त्वादेव। हेतुव्यवहारस्य हेतुपदवाच्यत्वव्यपदेशस्य उच्छेदप्रसङ्गात्-विनाशप्रसक्ते ॥ ५ ॥

६—( मूलम् ) दृष्टान्तोऽपि न साध्यादिविकल, धूमा दग्नेर्ज्ञानस्याप्रत्यक्षत्वसिद्धे, ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्था

पितप्रत्ययात्मकत्वप्रतीतेश्च ॥

दृष्टान्तो यदि साध्यादिविरहितो भवति तदा तेन दृष्टान्तेन हेतुसाध्ययोः सामानाधिकरण्यविरहप्रयोजकेन तादृशसाध्यहेतुकानु मित्यभावप्रयोजकेन भूयते प्रकृतदृष्टान्तस्तु न साध्यादिविकल — साध्यादिविरहित, तमेव साध्यादिवैकल्याभाव व्युत्पादयति धूमा दग्नेरित्यादिना—धूमज्ञानज्ञाप्यमग्निज्ञानमेव दृष्टान्त, तच ज्ञान मनुमित्यात्मक भवतीति निर्विवादमप्रत्यक्षत्वात्मकसाध्यस्य ग्राह्य ग्रहीतृव्यतिरिक्तधूमात्मकनिमित्तोत्थापितप्रत्ययात्मकत्वात्मकहेतोश्च सत्त्वेन प्रतीतदृष्टान्तावच्छेदेन हेतुसाध्ययो सामानाधिकरण्य निश्चयादनुमितिरुपपद्यते इति बोध्यम् ॥ ६ ॥

७–( मूलम् ) न साधनान्यावृत्त्यादि, केवलादुभय-स्यापि निवृत्ते, आत्मन साक्षादर्थपरिच्छेदात् सम्पूर्णार्थ-प्रतीतेश्च ॥

आह—अधिकृतप्रत्यक्षेणापि साक्षादर्थपरिच्छित्ति, न, अक्षैर्व्यवधानात्, तदभावेन तदभावात्, ज्ञानोत्पत्तिस्तथ्य, तत्परि च्छित्तिस्तु साक्षादवतिचेत् न, तद्व्यतिरेकेण तदसिद्धे, अतत् स्वभावस्योत्पत्तौ पुनस्तत्स्वभावत्वविरोधात्, नचानेन सम्पूर्णवस्त्व वगम, नीलादेरपि तारतम्यव्यावृत्त्याद्यपरिच्छित्तेस्तथानुभवात्, नरसिंहे सिंहज्ञानतुल्यत्वादिति ॥ ७ ॥

ननु केवल विपक्षमवलम्ब्यैव व्यभिचारादिदोषनारण विहि तम् परमथापि केवलस्य विपक्षत्वमेवासिद्धम्, साध्यास्याप्रत्य क्षत्वस्य प्राग्युक्तस्य हेतोश्च केवले सत्त्वेन तस्य विपक्षत्वाभावात् ।

पक्ष साधनाऽव्यावृत्तत्वात् व्यावृत्तिरभाव, न व्यावृत्तिरव्यावृत्ति साधनस्य अव्यावृत्ति साधनाव्यावृत्ति साधनसत्त्वम् आदिपदेन साध्याव्यावृत्तिस्तथा च साध्यहेतुसत्त्वात् न केवल विपक्ष इति शङ्का निराकुर्वन्नाह—न साधनाव्यावृत्त्यादीति । केवले साधना व्यावृत्त्यादिना तस्मात् केवलात् साध्यहेतूभयस्यापि निवृत्तत्वात्, स एव विपक्षो भवति यो निश्चितसाध्याभाववान् अथतो हेत्वभाववानपि भवेत् य साध्याभावप्रकारकनिश्चयविशेष्य हेत्वभाव प्रकारकनिश्चयविशेष्यश्च स विपक्ष, केवलस्य च साध्याभाव प्रकारकहेत्वभावप्रकारकनिश्चयविशेष्यतया नाय कश्चन विपक्ष सिद्धयतीति केवलस्य साक्षादर्थपरिच्छेदात्मक सम्पूर्णार्थप्रतीत्यात्मकत्व भवतीति तत् प्रत्यक्षमेव असाक्षादसम्पूर्णवस्तुपरिच्छेदात्मक पुनरप्रत्यक्ष भवतीति भगावदिदमेव ।

पुनरपि प्रतिज्ञाया प्रत्यक्षविरोधित्वमुपक्षेप्तु प्रयतमान पूर्वपक्षी प्रत्यवतिष्ठते—आहेति । अधिकृतप्रत्यक्षेण—इन्द्रियमनोनिमित्त विज्ञानात्मकप्रत्यक्षेणापि साक्षादर्थपरिच्छेदो भवतीति कथमुक्तम्—असाक्षादसम्पूर्णवस्तुपरिच्छेदात्मकत्वादिति, समाधत्ते—न इति । हेतुमा० — अक्षेव्यवधानात्— अक्षैरिन्द्रियैर्व्यवधानात्—यथायात साक्षादर्थपरिच्छेदाभावेन प्रत्यक्षत्वाभावात् तथान्द्रियमनोनिमित्त विज्ञान न प्रत्यक्षमेवेति न प्रतिज्ञाविरोध ।

पुन पूर्वपक्षी शङ्कते—ज्ञानोत्पत्तिरिति—तेभ्य इन्द्रियेभ्यो ज्ञानोत्पत्तिर्भवति, तत्परिच्छित्ति ज्ञानपरिच्छेद पुन साक्षादेव भवति इतिचेत्, समाधत्ते—नेति, तद्व्यतिरेकेण—

हेतुमाह—अतत्स्वेति —अतत्स्वभावस्य – असाक्षात्परिच्छेदस्वभावस्य–उत्पत्तौ सत्याम् तस्य तत्स्वभावत्वविरोधात्–साक्षात्परिच्छेदस्वभावत्वविरोधादित्यक्षरार्थं । अथ भाव –यद्वस्तु यादृशस्वभावसमुत्पन्नमान भवति तथादृशस्वभावमेव पश्चादवलोक्यते, एवञ्च प्रकृतेऽपि यदीन्द्रियैर्ज्ञानमसाक्षात्परिच्छेदस्वाभाव समुत्पद्येत तदा पश्चात् साक्षात्परिच्छेदस्वभावता न स्यादितिभाव । अधिकृतप्रत्यक्षेण सम्पूर्णार्थप्रतीतिरपि दु शकेत्याह–नचेत्यादिना । अनेन—इन्द्रियमनोनिमित्तविज्ञानेन, सम्पूर्णवस्त्वगम –सम्पूर्ण (सर्वावयवावच्छिन्नपदार्थबोध, नच नैव भवतीत्यर्थं । तत्र हेतुमाह–नीलादरपीत्यादिना—तारतम्यव्यावृत्त्यादेरपरिच्छेदात् नीलगुणविशिष्टघटादेरपि तारतम्यव्यावृत्तिविशिष्टस्य सम्पूर्णस्यानुभवात् नरसिंहेसिंहज्ञान यथा न सम्पूर्णवस्तुबोधात्मक तथैव यस्य कस्यचिद्घटादेरस्मदादृशज्ञान न सम्पूर्णघटबोधात्मकमिति सिद्धमिन्द्रियादिनिमित्तज्ञानस्यासम्पूर्णवस्तुपरिच्छेदात्मकत्वमिति – विरोधित्वमिति भाव ॥ ७ ॥

८ ( मूलम् ) अर्थस्वभावत्वकार्यत्वाभावे इन्द्रियादीना तेन प्रतिबन्धासिद्धे, तदवगमे तेषा लिङ्गत्वानुपपत्तिरिति चेत्, न, ज्ञाप्यज्ञापकभावेन प्रतिबन्धासिद्ध्यसिद्धे, नच सामग्र्यपेक्षया ग्राह्यवत् ज्ञानजननस्वभावत्वमेषाम्, सर्वथा-तदभिन्नस्वभावत्वे ततस्तत्प्रतीतिप्रसङ्गात्, स्वभावभेदे च सिद्धमेषा ज्ञापकत्वमिति ।

आह—एवमप्यमीषा ज्ञापकधर्मातिक्रम, अज्ञातज्ञापनात्, नहि धूमादाविव तज्ज्ञानादिपुरस्सरमर्थज्ञान,

तथासत्त्वभावात्, अक्षपैवैरावमनीतेरिति, न, स्वभाववैचित्र्यतस्तद्भावसिद्धेरज्ञातज्ञापकस्वभावत्वात्, नापकस्वभावत्व चेह प्रयोजकम्, अन्यथा कार्ये व्यतिरेकतस्तत्कारणत्वाङ्गीकरणेऽपि तत्त्वतस्तद्वदेतपा हेतुधर्मातिक्रम, बुद्ध्यादिषु तत्त्वाभ्युपगमाच्च, नचैतन्नुपपत्तिर्ज्ञप्ती, तेषामत्र त्वचेतनत्वेन ज्ञातृत्वायोगात्, किञ्च–परोक्षमात्रता चेह प्रतिपादयितुमिष्टा ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तमात्रत्वेनेत्यनुचित सर्वसाधर्म्याभिनिवेश, नचैव केवल, ग्राह्यग्रहीतृमात्रापेक्षितत्वात्, कर्मक्षयादेश्च क्षयोपशमादितुल्यत्वादित्यल प्रसङ्गेन ।

ननु यदीन्द्रियादीनामर्थस्वभावत्वकार्यत्व न स्वीक्रियते तर्हि तथार्थेन सम्बन्धस्यैवासिद्धि सम्बन्धासिद्धिज्ञाने च तेषा लिङ्गत्वमप्यनुपपन्नमित्याशङ्कते अर्थस्वभावेत्यादिना—समाधत्ते–नेत्यादि । इन्द्रियाणामर्थेन ज्ञाप्यज्ञापकभावसम्बन्धस्य सकलसिद्धान्तसिद्धतया ऽर्थस्वभावत्वकार्यत्वाभावेऽपि समापादितायाः सम्बन्धासिद्धेरेवासिद्धिरितिभाव । ननु सामग्रीमपेक्ष्य ग्राहकवदिन्द्रियाणा ज्ञानजननस्वभावत्वमेवास्ति न ज्ञापकत्वमिति तेषामर्थेन ज्ञाप्यज्ञापकभावसम्बन्धोऽनुपपन्न इत्याशङ्कते–नच सामग्र्यपक्षयेति, समाधत्ते–सर्वथेत्यादि, यदीन्द्रियाणा सर्वथा ज्ञानजननस्वभावाभिन्नस्वभावत्व तर्हि तयोऽर्थप्रतीतिवज्ज्ञानजननस्वभावत्वप्रतीतिरपि दुर्वारा, स्वभावभेदस्वीकारे च तेषा ज्ञापकत्वनैव काचिद्धानिरितिभाव ।

ननु ज्ञापकत्वे सत्येव इन्द्रियाणामर्थेन ज्ञाप्यज्ञापकभावसम्बन्ध स्वीकरणीयतामायाति, ज्ञापकत्व च तेषु ज्ञापकधर्मानतिक्रमे एव

भवेत्, स्वज्ञाने नान्यधीहेतुत्वात् ज्ञापकस्य ज्ञातज्ञापन धर्मः स्वीक्रियते धूमादेस्तदीयज्ञानपूर्वकवह्न्यादिज्ञानजननदर्शनात्, इन्द्रियाणामपि तत्स्वीकारे अव्यवधानेन वस्तुप्रतीत्यनुपपत्ति, एवञ्च ज्ञापकधर्मातिक्रमेण ज्ञापकत्वाभावतोऽर्थेन तेषां ज्ञाप्यज्ञापकभाव सम्बन्धोऽनुपपन्न एवेत्याशङ्कते पूर्वपक्षी–आह–एवमप्यमीषामित्यादिना, समाधत्ते–नेत्यादिना।

अज्ञातज्ञापकत्वस्वभावत्वेऽपीन्द्रियादिना स्वभाववैचित्र्यादेव ज्ञाप्यज्ञापकभावस्वीकारे नैव पूर्वोदीरिताऽनुपपत्तिरिति एतदेवोपपादयति–ज्ञापकस्वभावत्व चेदित्यादिना–ज्ञातत्वायोगादित्यन्तेन। यथा धूमहेतुकवह्न्यनुमाने धूमे धूममात्रत्वमपेक्ष्यते न पुनस्तत्र नीलत्व कपिशत्व वाऽप्यपेक्ष्यतेऽनुचितत्वात्तथाप्रकृतेऽपि इन्द्रियमनोनिमित्तविज्ञाने ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तमात्रत्वमेव परोक्षमात्रताऽपेक्ष्यत इत्यत्रापि सर्वसाधर्म्याभिनिवेशोऽनुचित एवेतिप्रतिपादयति सिद्धा तौ–विश्वेत्यादि—सर्वसाधर्म्याभिनिवेश इत्यन्तेन। ननु ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तमात्रत्वस्य हेतोर्यदि विपक्षत्वेन विवक्षिते केवलेऽवस्थितिस्तदा साध्याभाववद्वृत्तित्वेन व्यभिचारित्व भवेत्, सैव नास्तीत्याह–नचैवमिति। अनवस्थाने हेतुमाह ग्राह्यमित्यादि।

ननु केवलस्य ग्राह्यग्रहीतृभिन्नस्य कर्मक्षयाद्यात्मनः कस्यचिन्निमित्तस्य सत्यामपेक्षाया ग्राह्यग्रहीतृमात्रापेक्षित्वमनुपपन्नमित्याशङ्क्य समाधत्ते–कर्मक्षयादेश्चेत्यादिना। इन्द्रियमनोनिमित्तप्रत्यक्षात्मनि केऽपि ग्राह्यग्रहीतृव्यतिरिक्तस्य क्षयोपशमस्य निमित्तत्वेन पक्षवृत्तित्वमपि हेतोर्दुर्लभं भवेदिति हेतो पक्षनिष्ठत्वव्यवस्थाने क्षयोपशमस्य

मात्रमङ्गीकृत्यातिरिक्तनिमित्तान्तरेण विरोधो लक्ष्यते तथैव तस्य विपक्ष-वृत्तिरन्यत्रस्थानेऽपि कर्मक्षयादनिमित्तत्वं न स्वीकरणीयं " यश्चोभयोः समो दोषः परिहारोऽपि तयोः " इत्यभिप्रायादितिभावः ।

९ (मूलम्) नन्वशेषपदार्थग्राह्यतीन्द्रियप्रत्यक्षगोचरातिक्रान्तत्वमस्य, उभयासिद्धेः अभ्युपगमविरोधात् विवादानुपपत्तेश्च, अनुमानगोचरातिक्रान्तत्वं पुनरसिद्धमेव, सर्वधर्मादयः कस्यचित् प्रत्यक्षाः ज्ञेयत्वाद्, घटवत् विपक्षो न किञ्चिदित्यनुमानसद्भावात् ।

अत्राह—नेदमनुमानम्, तदाभासत्वात्, इह ह्यसिद्धविशेषणत्वादप्रसिद्धविशेषणः पक्षः, तथाहि-सर्वे धर्मादयः कस्यचित् प्रत्यक्षा इत्यत्रातीन्द्रियप्रत्यक्षेण प्रत्यक्षत्वं साधयितुमिष्टम्, न तत् कस्यचित् प्रसिद्धमिति, हेतुरप्यनैकान्तिकः, अप्रत्यक्षस्याप्यभावस्य ज्ञेयत्वोपपत्तेः, दृष्टान्तोऽपि साध्यविकलः, जात्यन्तरप्रत्यक्षेण प्रत्यक्षत्वासिद्धेः, इतरोऽपि साधनाव्यावृत्तः न किञ्चिदिति तुच्छेऽपि ज्ञेयत्वानिवृत्तेरिति ।

अशेषपदार्थग्राह्यतीन्द्रियप्रत्यक्षं हि यदि सर्वाण्यपि वस्तूनि गोचरीकरोति तदवश्यं सर्वज्ञमपि गोचरीकुर्यादेव, अन्यथा प्रत्यक्षस्य समस्तपदार्थग्राहित्वं सर्वज्ञाग्राहकत्वमित्युभयं विरुद्धं स्यात्, किञ्च सर्वज्ञेऽशेषपदार्थग्राह्यतीन्द्रियप्रत्यक्षगोचरातिक्रान्तत्वस्वीकारे प्रत्यक्षसम्बन्धी विवादोऽपि निर्मूलतयाऽनुपपन्नः स्यादित्येतन्मनसि

निधायाह–नचेत्यादि, निरासादनुपपत्तेश्चेत्यन्तेन ग्रन्थेन । यत्पूर्वं सर्वज्ञस्यानुमानगोचरातिक्रान्तत्वमुपपादितं पूर्वपक्षिणा तदिदानीं खण्डयितुमुपक्रमते सिद्धान्ती–अनुमानगोचरेत्यादिना–" विपक्षो न किञ्चिदित्यनुमानसद्भावात् " इत्यन्तेन । धर्माद्यात्मसु सर्वेषु पक्षेषु ज्ञेयत्वेन हेतुना किञ्चिन्निष्ठप्रत्यक्षविषयत्वानुमितिगोचरताया सर्वेष्वपि निराबाधैवेति भावः ।

ननु " सर्वे धर्मादयः कस्यचित् प्रत्यक्षाः " इत्यत्रातीन्द्रियप्रत्यक्षेणैव प्रत्यक्षं सिषाधयिषितम्, तच्च पुनः कस्यचिदपि प्रसिद्धमिति पक्षस्याप्रसिद्धविशेषणत्वादित्याश्रयासिद्ध्यात्मनो दोषस्य दुरुद्धरत्वात् पूर्वोक्तमनुमानमनुपपन्नमेवेत्याशङ्कते पूर्वपक्षी अत्राहेत्यादि, किञ्च ज्ञेयत्वं यदि भावमात्रवृत्तितया व्यवतिष्ठेत तदा तेन सद्धेतुना पूर्वोक्तानुमितिर्भवेदपि, परन्तु ज्ञेयत्वस्य प्रत्यक्षत्वात्म-साध्याभाववत्यभावेऽपि वर्तमानतया व्यभिचारित्वेन तस्य सद्धेतुत्वाभावादित्याह–हेतुरप्यनैकान्तिक इत्यादिना । किञ्च पर्वतो वह्निमान् धूमादित्यादौ दृष्टान्ते महानसे हेतुसाध्ययोर्धूमवह्न्योरुभयोरेव स्थितिरावश्यकी, अन्यथा ( अन्यतरस्य तत्रासत्त्वे ) दृष्टान्तत्वमेव विप्लुतं भवति तथाऽत्रापि दृष्टान्तभूते घटे साध्यस्य प्रत्यक्षत्वस्य स्थित्या भाव्यं परन्तु तत्र जात्यन्तरस्य घटत्वस्य प्रत्यक्षेण प्रत्यक्षत्वात्मनः साध्यस्य विरहाद् दृष्टान्तस्य साध्यवैकल्यात् पूर्वोक्तमनुमानमसदित्याह–दृष्टान्तोऽपीत्यादि । किञ्च विपक्षस्य ह्रदादेर्धूमाभाववत्त्वेन साधनव्यावृत्तत्वं सर्वानुभवसिद्धं, प्रकृते तु विपक्षे न किञ्चिदिति तुच्छे ज्ञेयत्वस्य हेतोः सत्त्वात् हेतौ विपक्षव्यावृत्तत्वाभावात् पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वासत्प्रतिपक्षितत्वाबाधितत्वात्म–पञ्चरूपोपपन्नत्वाभावेन तेन नानुमानं भवितुमर्हतीत्याह–इतरोऽपीत्यादि ।

१० ( मूलम् ) अत्रोच्यते—यत्तावदुक्तमप्रसिद्धविशेषणः प्रसिद्धविशेषण पक्ष इति एतदयुक्तम्, अनुमानोच्छेदप्रसङ्गात्, सर्वत्राप्रसिद्धविशेषणपक्षाभासत्वापत्तेः, एवं ह्यनित्यः शब्द इत्यादावपि वर्णाद्यात्मकव्यक्तिसमवाय्यनित्यत्वेनानित्यत्वं साधयितुमिष्टं, न तत्, क्वचित् प्रसिद्धमित्यपि वक्तुं शक्यत्वात्, अनित्यत्वजातिपरिग्रहाददोष इति चेत्, इहापि सत्यत्वजातिपरिग्रहे को दोषः ? इष्टासिद्धिरिति चेत्, शब्दानित्यत्वादौ समान एव दोषः, लौकिकत्वादनित्यत्वादेरसमानता इति चेत्, न, अलौकिकस्यापि वेदापौरुषेयत्वादेर्धर्मत्वेन त्वयाऽप्यङ्गीकृतत्वात्, हेतुरप्यदुष्टः, प्रमाणस्याप्रत्यक्षत्वासिद्धेर्वस्तुधर्मत्वात्, अन्यथा वस्त्वनुपपत्तेः, तस्य च प्रत्यक्षत्वात्, अतद्धर्मस्य चात्यन्तासतो ज्ञेयत्वायोगात्, मानेन ज्ञायमानस्य तदुपपत्तेः, तुच्छे च मानप्रवृत्त्यसम्भवाद्भासमानस्य च तदविशेषात् तद्वदप्रवृत्तेः ।

अथ सिद्धान्ती समाधातुमुपक्रमते—अत्रोच्यते—उपपादयति—यत्तावदुक्तमित्यादिना वक्तुं शक्यत्वादित्यन्तेन । पक्षेऽप्रसिद्धविशेषणत्वस्य दोषत्वस्वीकारे शब्दोऽनित्यः कार्यत्वात् ( अनित्यत्वात् ) इत्यादावपि वर्णाद्यात्मकव्यक्तिसमवेतत्वेनानित्यत्वेनैवानित्यत्वस्य साधयितुमिष्टत्वात्तस्य पुनरनित्यत्वस्य क्वचिदप्यप्रसिद्धतया पूर्वप्रदर्शितस्य दोषस्य दुरुद्धरत्वात् सर्वत्रानुमानोच्छेद एव स्यादिति निर्गलितार्थः ।

" शब्दोऽनित्य " इत्यादौ अनित्यत्वस्य जातित्वेन परिग्रहा यदि दोषनिवारयिषा तदा तत्रापि प्रत्यक्षत्वस्य तथात्वेन परिग्रहा दोषो वार्यतामित्याह–अनित्यत्वजातीत्यादि । को दोष ? इति अस्म दुक्तानुमाने यदीन्द्रस्य प्रत्यक्षत्वस्यासिद्धिरुद्भाव्यते तदा शब्दा नित्यत्वादावपि तथोद्भाव्यतामिति–शङ्कते–समाधत्ते च–इन्द्रासिद्धि रितीत्यादि । समान एव दोष इति ।

ननु अनित्यत्वस्य लौकिकत्वेन सिद्धिरुद्भावयितु शक्यते, प्रत्यक्षत्वस्य तथात्वाभावेन सा दुरुपपादैवेति पुन शङ्कते–लौकिके त्यादि । अलौकिकस्यापि वेदापौरुषेयत्वादेर्मेयत्वेन स्वीकृतवतस्तव नेद शङ्कन युक्तमिति समाधत्ते अलौकिकस्यापीत्यादिना—

पूर्वपक्षिणोदीरित हेतोर्व्यभिचरितत्व निराकरोति–" हेतुरि त्यादि" । वस्तुधर्मत्वाद्धेतोरभावस्य तदापादितमप्रत्यक्षत्वमेव नास्ति । वस्तुधर्मत्वास्वीकारे च तस्य वस्तुत्वमेव नोपपद्यते अस्ति च तत्र वस्तुत्व प्रत्यक्षमेवेत्यादि मनसि निधायाह–अभावस्येत्यादिना– प्रत्यक्षत्वात् इत्यन्तेन । साधनाव्यावृत्तत्वमपि हेतोरापादित व्युद स्यति–अतद्रूपस्येत्यादिना–अवस्तुत्ववतोऽस्य नासतस्तुच्छस्य ज्ञेयत्व नास्तीति भाव । कथञ्चिदपि स्वीक्रियमाण ज्ञेयत्व निराकरोति– मानेनेत्यादि । प्रमाणेन यज्ज्ञात भवति तत्रैव ज्ञेयत्वस्योपपत्तिरिति भाव । तदेवोपपादयति–तुच्छेचेत्यादि । तदविशेषात्–तुच्छा विशेषात् तद्वत्–तुच्छवत् एतेन पूर्वोक्तमनुमान सर्वथा निर्दुष्टमिति सर्वज्ञत्व नानुमानगोचरातिगा तत्वमित्याकलनीयम् ।

११ ( मूलम् ) अपरस्त्वाह, सर्वज्ञज्ञानस्य ज्ञेयत्वेऽपि प्रत्यक्षत्वानुपपत्ते , तेनार्थप्रत्यक्षत्वात्, तत्प्रत्यक्षत्वे च तद

प्रत्यक्षत्वप्रसङ्गात्, तदन्यसर्वज्ञप्रत्यक्षत्वे चानवस्थापत्तेर्व्यभिचार इति, तदप्यसत्, तस्यार्थग्रहणरूपस्य स्वसंविदितत्वे नोक्तदोषानुपपत्तेरध्यक्षत्वात्, अन्यथाऽर्थप्रत्यक्षत्वासिद्धेः दृश्येऽप्यदृश्यात्मनोऽविकृतत्वेनात्मनो दर्शिनो दर्शनायोगात्, विकृतत्वे चार्थं पश्यतस्त्वक्रियैव चिद्रूपा ज्ञानमिति सर्वज्ञत्वानुपपत्तेश्च।

अपरस्त्वाह हेतुर्येनैव सहाविनाभूतो दृष्टस्तस्यैव गमको भवति, यथा धूमोऽग्ने, नसद्भावमात्रात् यस्य कस्यचित्, यथा स एव धूम पानीयस्य, न चातीन्द्रियेषु भावेषु प्रत्यक्षत्वाविनाभावि ज्ञेयत्वं दृष्टं, कथं तत् तेषु तद् गमयेत्? अत्रोच्यते, सामान्यतो दृष्टानुमाननीत्या तत् तेषु तद् गमयेत् इति, यथा गतिमानादित्यो देशान्तरप्राप्तेः देवदत्तवदित्यत्र, तथाहि-न दिनकरे गतिमत्त्वेन देशान्तरप्राप्तिरविनाभूता दृष्टा, अथ चासौ तद् गमयति देवदत्ते दृष्टेति सा गमयतीतिचेत्, घटेऽपि प्रत्यक्षत्वेन ज्ञेयत्वमविनाभावि दृष्टमेवेति समानमेतत्। अतीन्द्रियप्रत्यक्षत्वेन न दृष्टमिति चेत्, देवदत्तेऽपि न तथा गगनगतिमत्त्वेन देशान्तरप्राप्तिरितिसमानमेव।

न साधर्म्यदृष्टान्तदोष, जात्यन्तरप्रत्यक्षेण तत्र प्रत्यक्षत्वासिद्धावपि सामान्येन प्रत्यक्षत्वसिद्धेः न्याय्यत्वमेव विशेषाननुगमाभावात्।

कश्चित् पुन सर्वज्ञज्ञानस्य ज्ञेयत्व मन्यमानोऽपि प्रत्यक्षत्व मस्वीकुर्वाण प्रत्यवतिष्ठते अपरस्त्वाहेत्यादि । कस्यचिदपि वस्तुनो ज्ञेयत्व प्रत्यक्षत्व च समकालमनुपपन्नमिति प्राय सर्वोऽपि मन्यत एव एवञ्च सर्वज्ञज्ञानस्य ज्ञेयत्वेऽपि तेनाथप्रत्यक्षत्वात् नास्ति प्रत्यक्षत्वम्, ज्ञानस्य प्रत्यक्षत्वस्वीकारेऽर्थस्याप्रत्यक्षत्व दुरुद्धर भवेत्, तदन्यसर्वज्ञप्रत्यक्षत्वस्वीकारोऽपि चानवस्थाभिया कर्तुमशक्य एवेति मवज्ञाज्ञानात्मनि पक्षे हेतोर्ज्ञेयत्वस्य सत्त्वेऽपि साध्यस्य प्रत्यक्षत्वस्यासत्त्वाद्व्यभिचार इतिप्रतिपक्षसाराश, तन्निराकरोति-एतदप्यसदिति, उपपादयति तस्यार्थग्रहणरूपस्येत्यादिना-सर्वज्ञत्वा नुपपत्तेश्चेत्य तत ।

अर्थग्रहणात्मनो ज्ञानस्य स्वसंविदितत्वेन प्रत्यक्षत्वस्य सूपपाद तयोभयप्रत्यक्षत्वाभ्युपगमे नास्त्येव काचित् क्षति, अन्यथार्थ प्रत्यक्षत्वासिद्धे हलेन-(ज्ञानसम्बन्ध) शून्यतयाविकारितयाऽऽत्मनो दर्शिनोऽवश्य दर्शनायोग, अर्थं पश्यत पुनर्विकृतत्वेन चिद्रूपा विक्रियैवाज्ञानमिति सर्वज्ञत्वमेवानुपपन्न भवेदितिमन्थ उपपादनीय ।

अथ ज्ञेयत्वे प्रत्यक्षत्वाविनाभावमनङ्गीकृत्योक्तमनुमान खण्डयितु प्रत्यवतिष्ठते—अपरस्त्वाहेत्यादिना, कथ तेषु तद् गमयेत इत्यन्तेन । साध्येनाविनाभूतस्यैव हेतो साध्यानुमापकत्वमिष्ट, यस्य कस्यचित् सद्भावमात्रतो नेष्टम्, अत एव धूमस्य वह्न्यनु मापकत्वमेव नतु पानीयानुमापकत्वमपीतिज्ञेयत्वस्यातीन्द्रियभावेषु प्रत्यक्षत्वाविनाभावादर्शनान्नातीन्द्रियभावेषु प्रत्यक्षत्वगमकत्वमिति तादृशय, समाधत्ते-अत्रोच्यतइति, उपपादयति-सामान्यतो दृष्ट त्यादि-दिनकरे गतिमत्त्वेन हेतुना देशान्तरप्राप्त्यात्मन साध्यस्या विनाभावाभावेऽपि सामान्यतो दृष्टानुमाननीत्या 'आदित्यो गति

मान् देशान्तरप्राप्ते, देवदत्तवत्' इत्यत्र गतिमत्त्वस्य दिनकरे देशान्तरप्राप्त्यनुमापकतयाऽविनाभावस्य प्रयोजकत्वमिति न प्रकृते ऽपि काचिदनुपपत्तिरित्याशय ।

ननु देवदत्ते दृष्टा देशान्तरप्राप्ति गमयेदित्याशङ्कते-देवदत्तदृष्टेतीत्यादि, समाधत्ते-घटोऽपीत्यादि। घटोऽपि ज्ञेयत्वस्य प्रत्यक्षत्वेनाविनाभाविनो दृष्टत्वमेवेतिभाव, अतीन्द्रियप्रत्यक्षत्वेना-विनाभावाभावदर्शनमपि देवदत्ते गमनगतिमत्त्वेन देशान्तर प्राप्त्यविनाभावाभावतुल्यमिति शङ्कयति-समाधत्ते च अतीन्द्रिय प्रत्यक्षत्वेनेत्यादिना-समानमेवेत्यन्तेन ।

साधर्म्यस्य साधर्म्यदृष्टान्तवैकल्यमाशङ्क्य निराकरोति-न साधर्म्येत्यादिना विशेषानुगमाभावादित्यन्तेन ।

१२-(मूलम्) न वैधर्म्यदृष्टान्तदोषः, न किञ्चिदिति तु अभावतो व्यतिरेकनिवृत्ते, प्रतिपादनोपायत्वात् तदभिधाने दोषोऽन्यथा, निःस्वभावतया न ततो ज्ञानजन्मेति प्रसङ्गादिति ।

अथ चेदमनुमानम्-अनेकशास्त्रार्थसंवेदनसमन्विते कस्मिंश्चित् पुरुषे सर्वज्ञ इत्युपचर्यमाणो व्यवहारस्तदन्य-स्मिन्नपायेस, गौणत्वात् शौर्यक्रौर्यादिमति मैनेऽसिंहे' सिंह व्यवहारवत् विपक्षेऽनव्यवहार इति ।

नात्र प्रत्यक्षादिविरोधिनी प्रतिज्ञा, तल्लक्षणायोगात्, नासिद्धो हेतु तत्र गौणत्वस्योभयो, सिद्धत्वात् । नानैकान्तिकः, विपक्षव्यावृत्ते । न विरुद्धो, दृष्टान्तवत् प्रमाणान्तर

प्रसिद्धतन्मयमुख्यापेक्षत्वसाधनस्य तद्ग्राहकप्रमाणप्रसिद्ध्य भ्युपगमऽनवकाशत्वात् ।

न साधनधर्मासिद्ध साधर्म्यदृष्टान्त , उभयधर्म प्रसिद्धे । न साधनाव्यावृत्तादिरितर , चैत्रे स्वव्यवहारा- दुभयनिवृत्तेरिति ।

पुन साध्यस्य वैधर्म्यदृष्टान्तदोषमाशङ्क्य व्युदस्यति-न वैधर्म्य दृष्टान्तेत्यादिना-ज्ञानज मातिप्रसङ्गादित्यन्तेन ।

अथ सिद्धान्ती प्रकारान्तरेणापि सर्वज्ञसिद्धिं दर्शयितुमनु मानान्तरमुपक्रमते अथचेदमनुमानमिति ।

कुत्रचिदन्यत्र प्रसिद्धस्यैव वस्तुनोऽन्यत्र तत्सदृशे व्यवहारो पचार क्रियते यथा शौर्यक्रौर्यादिमत्त्वेन प्रसिद्धस्य सिंहस्य तादृशि चैत्रेऽसिंहेऽपि सिं व्यवहार इतिप्रसिद्ध केचित् सर्वज्ञ मन्तरेण अनेकशास्त्रकलासंवेदनसमन्विते कस्मिश्चित् पुरुषे सर्वज्ञ त्वव्यवहारोपचारस्य तदन्यमुख्यापेक्षितया तदन्यो य स सर्वज्ञ इत्यर्थेन सर्वज्ञसिद्धिरितिभाव ।

उक्तानुमाने प्रतिज्ञाया प्रत्यक्षादिविरोधित्वमाशङ्क्य खण्डयति नात्रेत्यादिना हेतोरसिद्धत्वमनुद्य निराकरोति-नासिद्धो हेतु रित्यादिना । अनैकान्तिकत्व हेतोरपनोदयितुमुपक्रमते-नानै कान्तिक इत्यादिना । विरुद्धत्व व्युदस्यति न विरुद्धविति, उपपादयति-दृष्टान्तवदित्यादिना । साधर्म्यदृष्टान्तस्य हेतुधर्मा सिद्धत्व खण्डयति-न साधनेत्यादि । विपक्षस्य साधनाव्यावृत्तत्व वारयति-न साधनाव्यावृत्तेत्यादिना, निवृत्तेरिसीत्यन्तेन ।

इति पूज्याचार्यप्रवरश्रीहरिभद्रसूरीश्वरविरचितायां सर्वज्ञसिद्धौ शास्त्र विशारद कविरत्न पूज्यपादाचार्यमहाराजश्रीविजयामृतसूरीश्वर कृतायां सर्वहिताऽऽख्यायां व्याख्यायां 'अनुमानप्रमाणातिक्रान्तत्वरूपमहत्त्वप्रतिषेधपूर्वपक्षखण्डननामिध' द्वितीयं प्रकरणम् ॥



१३-( मूलम् ) आगमगोचरातिक्रान्तत्वमप्यसिद्धं, 'स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्यम्', इतिवचनप्रामाण्यात्, केवलिनश्च सर्वज्ञत्वात्, पुरुषकर्तृत्वादिदमप्रमाणमितिचेत्? न तावद् वक्तृत्वेन तत्कर्तृकत्वासिद्धि, नचैतत् स्ववचनविरोधि 'नमस्तीर्थाय' इतिवचनात्, नच पुरुषवक्तृत्वमप्यस्याप्रामाण्य निमित्तं, वेदाप्रामाण्यप्रसङ्गात्, नच तद वक्तरा वदा, पुरुषव्यापारमन्तरेण नमस्येतद्वचनानुपलब्धे आनुपूर्वीनियतिभावादेश्चेतरत्रापि तुल्यत्वात्, नचार्हद्वक्तृत्वेनास्य प्रामाण्यं, निश्चिताविपरीतप्रत्ययोत्पादकत्वेन कथञ्चित् स्वत एव तदभ्युपगमात्, अन्यथा तदनुपपत्तेः, अनुपपत्तिश्चास्य प्रामाणाभावात्, तस्य चोपादानेतरनिमित्तप्रभावेण स्वपराधीनत्वादर्थग्रहणपरिणामप्रत्ययान्तरानुभवत, स्वपरत एव ज्ञप्ते कर्मकरणनिष्पाद्यस्य तदुभयापेक्षित्वेन स्वपरतः स्वकार्यप्रवर्तनात्, नच विज्ञानस्यार्थपरिच्छेदलक्षणोऽपि धर्मो व्यतिरिक्त एव, तस्यायमिति सम्बन्धानुपपत्ते, कथञ्चिदव्यतिरेके च तद्वत्तस्यापि भाव, न च ज्ञानस्यापि

न परत 'इन्द्रियमनोऽर्थसन्निकर्षो हि ज्ञानस्य हेतुः' इति वचनात् परता भावसिद्धेः, नचागमनित्यत्वेऽपि सर्वज्ञस्य नावैयर्थ्यं, तस्य विहितानुष्ठानफलत्वात्, नेचादृश्यत्वेनास्य फलकल्पनानुपपत्तिः, स्वर्गादिभिरतिप्रसङ्गात्, न च ते सुखादिरूपत्वाद् दृश्या एवेति न्याय्यं, प्रकृष्टसुखविशेष स्यादृश्यत्वात्, न च सुखमात्रानुभवरूप एव स्वर्गः, अति प्रसङ्गात्, यतः कुतश्चित्तद्भावेन चोदनानर्थक्यापत्तेश्च। न च सुखसामान्यदर्शनाद् व प्रकृष्टतद्विशेषसम्भवानुमानमबाधं, ज्ञानसामान्यदर्शनेन प्रकृष्ट तद्विशेषसम्भवानुमानमाप्तेः'।

प्रत्यक्षानुमानगोचरातिक्रान्तत्व निरस्येदानीमवसरसङ्गतिप्राप्त मागमगोचरातिक्रान्ततत्त्वमपि निराकर्तुमुपक्रमते भगवान् ग्रन्थकार- आगमगोचरातिक्रान्ततत्त्वमप्यसिद्धमिति । तमेवासिद्धिप्रकारमाह "स्वर्गीति"-इदमागमवचनमेव सर्वज्ञे प्रमाणमवगन्तव्यम् यथाविधि तपोध्यानाद्यनुष्ठात्रा सिद्धतपोध्यानादिफलेन स्वर्गिणा केवलिना च भवितव्यमिति निश्चितम्, तत्र च केवली निष्पद्यते स एवास्माकं सर्वज्ञ इत्याशयेनाह-केवलिनश्चेति । न चागम प्रमाण मन्यमानेनैव भवता केवली सर्वज्ञ साध्यते, सचागम एवाप्रमाणमस्माभिर्मन्यते तस्य पुरुषकर्तृकत्वादित्याशङ्कते-पुरुषेति पुरुषकर्तृकत्वात्-पुरुष समवेतप्रयत्नविषयत्वात् । इदम्-आगमात्मक वचनम्, अप्रमाणम्- प्रमाणभिन्नम् । समाधत्ते-नेति, समाधानप्रकारमाह तावदिति-पुरुषस्य तावदागमवक्तृत्वेन हेतुनाऽऽगमवचनस्य पुरुषकर्तृकत्वासिद्धेः, पुरुषे आगमवक्तृत्वमेव स्वीक्रियते नतु तत्कर्तृत्वमपीति पुरुषकर्तृकत्वेनाऽऽ- पादितमागमाप्रामाण्य न क्षोदक्षममितिभाव । ननु भवेदियसनाप

त्तियदि स्वतन्त्रे आगमस्य पुरुषवक्तृकत्वं स्वीकृतं स्यात् तदैव नाप्नोति शङ्कते-नचैतदिति । एतत्-आगमस्य पुरुषवक्तृकत्वम्, स्वतन्त्रविरोधि - स्वशास्त्रविरुद्धमित्यर्थः । समाधत्ते — नमेति- "नमस्तीर्थाय" इत्येतद्वचनं तीर्थकृताप्युच्यते न तु क्रियत इति स्वतन्त्र्यस्यागमस्य पुरुषवक्तृकत्वं सिद्धं वदितव्यम्, ननु भवतु पुरुषवक्तृकत्वेन तदस्वतन्त्रत्वासिद्धिर्न तावता भवतामभीष्टसिद्धि पुरुषवक्तृकत्वस्यापि तदप्रामाण्यप्रयोजकत्वादित्याशङ्कते—नचपुरुषे त्यादि । अस्य-आगमस्य । निमित्तम्-प्रयोजकम् । समाधत्ते- यदित्यादि । तन्निष्ठपुरुषवक्तृकत्वं यदि तदप्रामाण्यप्रयोजकं तदा वेदानामपि पुरुषवक्तृकत्वेनाप्रामाण्यं दुर्वारञ्च तद्भवतामिष्टमिति । ननु सम्भवदियमापत्तिरस्माकं यदि वयं वेदानां पुरुषवक्तृकत्व- मभ्युपगच्छेम तदेव तु नाभ्युपगच्छाम इत्याशङ्कते-नचवेदेत्यादि । सिद्धान्ती समाधत्ते-पुरुषव्यापारेति-पुरुषस्योच्चारणात्मकव्यापारं विना कर्णविवरवर्त्याकाशावच्छेदे न वेदात्मकवचनश्रावणप्रत्यक्ष मनुभवत्स्यात्तत पुरुषवक्तृकत्वमवश्यं स्वीकरणीयमेवेतिभावः । ननु तदुपलब्धौ वैदीयाऽऽनुपूर्वीनियतिभावादेः प्रयोजकत्वमभ्यु पगम्यत इति पुरुषव्यापारं विनापि न तदुपलब्धौ किञ्चि- द्बाधकमिति चेत्तत्राह—आनुपूर्वीत्यादिना । आगमेऽपि तादृशानु पूर्वीनियतिभावादेः समानतया पुरुषवक्तृकत्वप्रयोज्यमप्रामाण्य- मप्रनोदितमवसेयमितिभावः ।

ननु भवद्भिरर्हद्वक्तृकत्वेनैवाऽऽगमस्य प्रामाण्यमभ्युपगम्यते तथा च नास्मन्मते तत्र प्रामाण्यं पुरुषवक्तृकत्वादित्याशङ्कते– यथार्हदित्यादिना—समाधानमाह निश्चितेत्यादि-शब्दगतं प्रामाण्यं निश्चितानिपरीतप्रत्ययोत्पादकत्वमेव तच्च स्वत एव तत्र स्वीकर्-

न परत 'इन्द्रियमनोऽर्थसन्निकर्षो हि ज्ञानस्य हेतु' इति वचनात् परता भावसिद्धे, नचागमनित्यत्वेऽपि सर्वज्ञत्व नार्थक्यं, तस्य विदितानुष्ठानफलत्वात्, नचादृश्यत्वेनास्य फलकल्पनानुपपत्तिः, स्वर्गादिभिरतिप्रसङ्गात्, न च ते सुखादिरूपत्वाद् दृश्या एवेति न्याय्य, प्रकृष्टसुखविशेष स्यादृश्यत्वात्, न च सुखमात्रानुभवरूप एव स्वर्ग., अति प्रसङ्गात्, यतः कुतश्चित्तद्भावेन चोदनानर्थक्यापत्तेश्च। न च सुखसामान्यदर्शनाद् व प्रकृष्टतद्विशेषसम्भवानुमानमबाधर, ज्ञानसामान्यदर्शनेन प्रकृष्ट तद्विशेषसम्भवानुमानमाप्तेः।

प्रत्यक्षानुमानगोचरातिक्रान्तत्व निरस्येदानीमवसरसङ्गतिप्राप्त मागमगोचरातिक्रान्तत्वमपि निराकर्तुमुपक्रमते भगवान् ग्रन्थकार– आगमगोचरातिक्रान्तत्वमप्यसिद्धमिति। तमेवासिद्धिप्रकारमाह "स्वर्गेति"–इदमागमवचनमेव सर्वज्ञे प्रमाणमन्यत्र यथाविधि तपोध्यानाद्यनुष्ठाना सिद्धतपोध्यानादिफलेन स्वर्गिणा केवलिना च भवितव्यमिति निश्चितम्, तत्र य केवली निष्पद्यते स एवास्माकं सर्वज्ञ इत्याशयेनाह–केवलिनश्चेति। न बागम प्रमाण मन्यमानैरेव भवता केवली सर्वज्ञ साध्यते, सचागम एवाप्रमाणमस्माभिर्मन्यते तस्य पुरुषकर्तृकत्वादित्याशङ्कते–पुरुषेति पुरुषकर्तृकत्वात्–पुरुष समवेतप्रयत्ननिषयत्वात्। इदम्–आगमात्मक वचनम्, अप्रमाणम्– प्रमाणभिन्नम्। समाधत्ते–नेति, समाधानप्रकारमाह तावदिति–पुरुषस्य तावदागमकर्तृत्वेन हेतुनाऽऽगमवचनस्य पुरुषकर्तृकत्वासिद्धेः, पुरुषे आगमवक्तृत्वमेव स्वीक्रियते नतु तत्कर्तृत्वमपीति पुरुषकर्तृकत्वेनाऽऽ- पादितमागमाप्रामाण्य न क्षोदक्षममितिभाव। ननु भवेदियमनाप

त्विति स्वतन्त्रे आगमस्य पुरुषवक्तृकत्वं स्वीकृतं स्यात् तदेव नास्तीति शङ्कते-नचैतदिति । एतत्-आगमस्य पुरुषवक्तृकत्वम्, स्वतन्त्रविरोधि – स्वशास्त्रविरुद्धमित्यर्थः । समाधत्ते — नमेति– "नमस्तीर्थाय" इत्येतद्वचनं तीर्थकृताप्युच्यते न तु क्रियते इति स्वतन्त्रेऽप्यागमस्य पुरुषवक्तृकत्वं सिद्धं वदितव्यम्, ननु भवतु पुरुषवक्तृकत्वं तत्स्वतन्त्रत्वासिद्धिर्न तावता भवतामभीष्टसिद्धिः पुरुषवक्तृकत्वस्यापि तदप्रामाण्यप्रयोजकत्वादित्याशङ्कते—नचपुरुषे त्यादि । अस्य-आगमस्य । निमित्तम्-प्रयोजकम् । समाधत्ते– वदत्यादि । तन्निष्ठपुरुषवक्तृकत्वं यदि तदप्रामाण्यप्रयोजकं तदा वेदानामपि पुरुषवक्तृकत्वेनाप्रामाण्यं दुर्वारञ्च तद्भवतामिष्टमिति । ननु भवद्भिरियमापत्तिरस्माकं यदि वयं वेदानां पुरुषवक्तृकत्व-मभ्युपगच्छेम तदेव तु नाभ्युपगच्छाम इत्याशङ्कते-नचतदित्यादि । सिद्धान्ती समाधत्ते-पुरुषव्यापारेति-पुरुषस्योच्चारणात्मकव्यापारं विना कर्णविवरवर्त्याकाशावच्छेदे न वेदात्मकवचनश्रावणप्रत्यक्ष मनुपपन्नं स्यात्तत पुरुषवक्तृकत्वमवश्यं स्वीकरणीयमेवेतिभावः । ननु तदुपलब्धौ वर्णानामाऽऽनुपूर्वीनियतिभावादेः प्रयोजकत्वमभ्यु पगम्यत इति पुरुषव्यापारं विनापि न तदुपलब्धौ किञ्चि द्बाधकमितिचेत्तत्राह—आनुपूर्वीत्यादिना । आगमेऽपि तादृशानु पूर्वीनियतिभावादेः समानतया पुरुषवक्तृकत्वप्रयोज्यमप्रामाण्य-मपनोदितमपसेयमितिभावः ।

ननु भवद्भिरर्हद्वक्तृकत्वेनैवाऽऽगमस्य प्रामाण्यमभ्युपगम्यते तथा च नास्माकं मतं तत्र प्रामाण्यं पुरुषवक्तृकत्वादित्याशङ्कते– मचार्हदित्यादिना—समाधानमाह निश्चितेत्यादि–शब्दगतं प्रामाण्यं निश्चिताविपरीतप्रत्ययोत्पादकत्वमेव तच्च स्वत एव तत्र स्वीकर-

न परत 'इन्द्रियमनोऽर्थसन्निकर्षो हि ज्ञानस्य हेतु' इति वचनात् परतो भावसिद्धेः, नचागमनित्यत्वेऽपि सर्वज्ञकल्पनावैयर्थ्यं, तस्य विहितानुष्ठानफलत्वात्, नचादृश्यत्वेनास्य फलकल्पनानुपपत्तिः, स्वर्गादिभिरतिप्रसङ्गात्, न च तं सुखादिरूपत्वाद् दृश्या एवेति न्याय्य, प्रकृष्टसुखविशेषस्यादृश्यत्वात्, न च सुखमात्रानुभवरूप एव स्वर्गः, अतिप्रसङ्गात्, यतः कुतश्चित्तद्भावेन चोदनानर्थक्यापत्तेश्च। न च सुखसामान्यदर्शनाद् व प्रकृष्टतद्विशेषसम्भवानुमानमबाधित, ज्ञानसामान्यदर्शनेन प्रकृष्ट तद्विशेषसम्भवानुमानप्राप्ते.।

प्रत्यक्षानुमानगोचरातिक्रान्तत्व निरस्येदानीमवसरसङ्गतिप्राप्तमागमगोचरातिक्रान्तत्वमपि निराकर्तुमुपक्रमते भगवान् ग्रन्थकार—आगमगोचरातिक्रान्तत्वमप्यसिद्धमिति । तमेवासिद्धिप्रकारमाह "स्वर्गेति"—इदमागमवचनमेव सर्वज्ञे प्रमाणमवगन्तव्यम् यथाविधि तपोध्यानाद्यनुष्ठात्रा सिद्धतपोध्यानादिफलेन स्वर्गिणा केवलिना च भवितव्यमिति निश्चितम्, तत्र य केवली निष्पद्यते स एवास्माकं सर्वज्ञ इत्याशयेनाह—केवलिनश्चेति । न चागम प्रमाण मन्यमानेनैव भवता केवली सर्वज्ञ साध्यते, स चागम एवाप्रमाणमस्माभिर्मन्यत तस्य पुरुषकर्तृकत्वादित्याशङ्कते—पुरुषेति पुरुषकर्तृकत्वात्—पुरुषसमवेतप्रयत्नविषयत्वात् । इदम्—आगमात्मक वचनम्, अप्रमाणम्—प्रमाणभिन्नम । समाधत्ते—नेति, समाधानप्रकारमाह तावदिति—पुरुषस्य तावदागमवक्तृत्वेन हेतुनाऽऽगमवचनस्य पुरुषकर्तृकत्वासिद्धे, पुरुषे आगमवक्तृत्वमेव स्वीक्रियते नतु तत्कर्तृत्वमपीति पुरुषकर्तृकत्वेनाऽऽपादितमागमाप्रामाण्य न क्षोदक्षममितिभाव । ननु भवेदियमनाप

त्रियदि स्वतन्त्रे आगमस्य पुरुषवक्तृकत्वं स्वीकृतं स्यात् तदेव नाप्नोतीत्याशङ्कते-नचैतदिति । एतत्-आगमस्य पुरुषवक्तृकत्वम्, स्वतन्त्रविरोधि - स्वशास्त्रविरुद्धमित्यर्थः । समाधत्ते — नमेति- "नमस्तीर्थाय" इत्येतद्वचनं तीर्थकृताप्युच्यते न तु क्रियत इति स्वतन्त्र्यागमस्य पुरुषवक्तृकत्वं सिद्धं वदितव्यम्, ननु भवतु पुरुषवक्तृत्वेन तदकर्तृकत्वासिद्धिर्न् तावता भवतामभीष्टसिद्धि पुरुषवक्तृकत्वस्यापि तदप्रामाण्यप्रयोजकत्वादित्याशङ्कते—नचपुरुषे त्यादि । अस्य-आगमस्य । निमित्तम्-प्रयोजकम् । समाधत्ते- वेदत्यादि । नन्विष्टपुरुषवक्तृकत्वं यदि तदप्रामाण्यप्रयोजकं तदा वेदानामपि पुरुषवक्तृकत्वेनाप्रामाण्यं दुर्वारञ्च तद्भवतामिष्टमिति । ननु सम्भवदियमापत्तिरस्माकं यदि वयं वेदानां पुरुषवक्तृकत्व- मभ्युपगच्छेम तदेव तु नाभ्युपगच्छाम इत्याशङ्कते-नचवेदेत्यादि । सिद्धान्ती समाधत्ते-पुरुषव्यापारेति-पुरुषस्योच्चारणात्मकव्यापारं विना कर्णविवरवर्त्याकाशावच्छेदे न वेदात्मकवचनश्रावणप्रत्यक्ष मनुपपन्नं स्यात्तत् पुरुषवक्तृकत्वमवश्यं स्वीकरणीयमेवेतिभावः । ननु तदुपलब्धौ वेदीयाऽऽनुपूर्वीनियतिभावादे प्रयोजकत्वमभ्यु पगम्यत इति पुरुषव्यापारं विनापि न तदुपलब्धौ किञ्चि द्बाधकमिति चेत्तत्राह—आनुपूर्वीत्यादिना । आगमेऽपि तादृशानु पूर्वीनियतिभावात् समानतया पुरुषवक्तृकत्वप्रयोज्यमप्रामाण्य मपनोदितमवसेयमितिभावः ।

ननु भवद्भिरर्हद्वक्तृकत्वेनैवाऽऽगमस्य प्रामाण्यमभ्युपगम्यते तथा च नास्मन्मते तत्र प्रामाण्यं पुरुषवक्तृकत्वादित्याशङ्कते- मयार्हदित्यादिना—समाधानमाह निश्चितेत्यादि-शब्दगतं प्रामाण्यं निश्चिताविपरीतप्रत्ययोत्पादकत्वमेव तच्च स्वत एव तत्र स्वीकर

न परत 'इन्द्रियमनोऽर्थसन्निकर्षो हि ज्ञानस्य हेतु' इति वचनात् परता भावसिद्धे, नचागमनित्यत्वेऽपि सत्यज्ञस्य नान्तर्यं, तस्य विहितानुष्ठानफलत्वात्, नैवादृश्यत्वेनास्य फलस्यकल्पनानुपपत्ति, स्वर्गादिभिरतिप्रसङ्गात्, न च न सुखादिरूपत्वाद् दृश्या एवेति न्याय्य, प्रकृष्टसुखविशेषस्यादृश्यत्वात्, न च सुखमात्रानुभवरूप एव स्वर्ग, अतिप्रसङ्गात्, यत कुतश्चित्-भावेन चोदनानर्थक्यापत्तेश्च। न च सुखसामान्यदर्शनाद् न प्रकृष्टतद्विशेषसम्भवानुमानमबाधत्व, ज्ञानसामान्यदर्शनेन प्रकृष्ट तद्विशेषसम्भवानुमानमात्तेः।

प्रत्यक्षानुमानगोचरातिक्रान्तत्वं निरस्येदानीमवसरसङ्गतिप्राप्तमागमगोचरातिक्रान्तत्वमपि निराकर्तुमुपक्रमते भगवान् प्रत्यकार-आगमगोचरातिक्रान्तत्वमप्यसिद्धमिति। तमेवासिद्धिप्रकारमाह "स्वर्गेति"-इदमागमवचनमेव सर्वज्ञे प्रमाणमत्र तथ्यम् यथाविधि तपोध्यानाद्यनुष्ठात्रा सिद्धतपोध्यानादिफलेन स्वर्गिणा केवलिना च भवितव्यमिति निश्चितम्, तत्र च केवली निष्पद्यते स प्वास्माक सर्वज्ञ इत्याशयेनाह-केवलिनश्चेति। न चागम प्रमाण मन्यमानैरेव भवता केवली सर्वज्ञ साध्यते, नचागम एवाप्रमाणमस्माभिर्मन्यते तस्य पुरुषकर्तृकत्वादित्याशङ्कते-पुरुषेति पुरुषकर्तृकत्वात्-पुरुषसमवेतप्रयत्नविषयत्वात्। इदम्-आगमात्मक वचनम्, अप्रमाणम्-प्रमाणभिन्नम्। समाधत्ते-नेति, समाधानप्रकारमाह तावदिति-पुरुषस्य तावदागमवक्तृत्वेन हेतुनाऽऽगमवचनस्य पुरुषकर्तृकत्वासिद्धे, पुरुषे आगमवक्तृत्वमेव स्वीक्रियते ननु तत्कर्तृत्वमपीति पुरुषकर्तृकत्वेनाऽऽपादितमागमाप्रामाण्य न क्षोदक्षममितिभाव। ननु भवेदियमनाप

त्विदि स्वतन्त्रे आगमस्य पुरुषकर्तृकत्वं स्वीकृतं स्यात् तदेव नाम्नाति शङ्कत-नचैतदिति । एतत्-आगमस्य पुरुषकर्तृकत्वम्, स्वतन्त्रविरोधि - स्वशास्त्रविरुद्धमित्यर्थः । समाधत्ते — नमेति- "नमस्तीर्थाय" इत्येतद्वचनं तीर्थकृताप्युच्यते न तु क्रियते इति स्वतन्त्रेऽप्यागमस्य पुरुषकर्तृकत्वं सिद्धं वदितव्यम्, ननु भवतु पुरुषकर्तृत्वेन तदकर्तृकत्वासिद्धिन तावता भवतामभीष्टसिद्धि पुरुषकर्तृकत्वस्यापि तदप्रामाण्यप्रयोजकत्वादित्याशङ्कते—नचपुरुषे त्यादि । अस्य-आगमस्य । निमित्तम्-प्रयोजकम् । समाधत्ते- वदित्यादि । तन्निष्ठपुरुषकर्तृकत्वं यदि तदप्रामाण्यप्रयोजकं तदा वेदानामपि पुरुषकर्तृकत्वेनाप्रामाण्यं दुर्वारञ्च तद्भवतामिष्टमिति । ननु सम्भवदियमापत्तिरस्माकं यदि वयं वेदानां पुरुषकर्तृकत्व- मभ्युपगच्छेम तदेव तु नाभ्युपगच्छाम इत्याशङ्कते-नचतदेत्यादि । सिद्धान्ती समाधत्ते-पुरुषव्यापारेति-पुरुषस्योच्चारणात्मकव्यापारं विना कर्णविवरवर्त्याकाशावच्छेदे न वेदात्मकवचनश्रावणप्रसङ्ग मनुपपन्न स्यात्तत पुरुषकर्तृकत्वमवश्यं स्वीकरणीयमेवेतिभाव । ननु तदुपलम्भौ वर्णानामानुपूर्वीनियतिभावादे प्रयोजकत्वमभ्यु पगम्यते इति पुरुषव्यापारं विनापि न तदुपलम्भौ किञ्चि द्बाधकमितिचेत्तत्राह—आनुपूर्वीत्यादिना । आगमेऽपि तादृशानु पूर्वीनियतिभावाद समानतया पुरुषकर्तृकत्वप्रयोज्यमप्रामाण्य मपनोदितमवसेयमितिभाव ।

ननु भवद्भिरर्हत्कर्तृकत्वेनैवाऽऽगमस्य प्रामाण्यमभ्युपगम्यते तथा च नास्माकं मते तत्र प्रामाण्यं पुरुषकर्तृकत्वादित्याशङ्कते- नचार्हदित्यादिना—समाधानमाह निश्चितेत्यादि-शब्दगतं प्रामाण्यं निश्चिताविपरीतप्रत्ययोत्पादकत्वमेव तच्च स्वत एव तत्र स्वीकर

न परत 'इन्द्रियमनोऽर्थसन्निकर्षो हि ज्ञानस्य हेतु' इति वचनात् परता भावसिद्धे, नचागमनित्यत्वेऽपि सगहरस्य नानैयर्थ्यं, तस्य विहितानुष्ठानफलत्वात्, नचादृश्यत्वेनास्य फलकल्पनानुपपत्ति, स्वर्गादिभिरतिप्रसङ्गात्, न च त सुखादिरूपत्वाद् दृश्या एवेति न्याय्य, प्रकृष्टसुखविशेष स्यादृश्यत्वात्, न च सुखमात्रानुभवरूप एव स्वर्ग, अति प्रसङ्गात्, यत कुतश्चित्प्रभावेन चोदनानर्थक्यापत्तेश्च। न च सुखसामान्यदर्शनाद् न प्रकृष्टतद्विशेषसम्भवानुमानमबाधकं, ज्ञानसामान्यदर्शनेन प्रकृष्ट तद्विशेषसम्भवानुमानमाप्ते'।

प्रत्यक्षानुमानगोचरातिक्रान्ततत्त्व निरस्येदानीमवसरसङ्गतिप्राप्त मागमगोचरातिक्रान्ततत्त्वमपि निराकर्तुमुपक्रमते भगवान ग्रन्थकार – आगमगोचरातिक्रान्ततत्त्वमप्यसिद्धमिति। तमेवासिद्धिप्रकारमाह "स्वर्गेति"–इदमागमवचनमेव सर्वज्ञे प्रमाणमवगन्तव्यम् यथाविधि तपोध्यानाद्यनुष्ठाना सिद्धतपोध्यानादिफलेन स्वर्गिणा केवलिना च भवितव्यमिति निश्चितम्, तत्र य केवली निरूप्यते स एवास्माक सर्वज्ञ इत्याशयेनाह–केवलिनश्चेति। न चागम प्रमाण मन्यमानेनैव भवता केवली सर्वज्ञ साध्यते, सचागम एवाप्रमाणमस्माभिर्मन्यते तस्य पुरुषकर्तृकत्वादित्याशङ्कते–पुरुषेति पुरुषकर्तृकत्वात्–पुरुष समवेतप्रयत्नविषयत्वात्। इदम्–आगमात्मक वचनम्, अप्रमाणम्–प्रमाणभिन्नम्। समाधत्ते–नेति, समाधानप्रकारमाह तावदिति–पुरुषस्य तावदागमवक्तृत्वेन हेतुनाऽऽगमवचनस्य पुरुषकर्तृकत्वासिद्धे, पुरुषे आगमवक्तृत्वमेव स्वीक्रियते नतु तत्कर्तृत्वमपीति पुरुषकर्तृकत्वेनाऽऽपादितमागमाप्रामाण्य न क्षोदक्षममितिभाव। ननु भवेदियमनाप

चित्यदि भवद्भिर्  आगमस्य पुरुषकर्तृकत्वं स्वीकृतं स्यात् तदैव नाप्नोति शङ्कते-नचैवमिति । एतत्-आगमस्य पुरुषकर्तृकत्वम्, स्वतन्त्रविरोधि - स्वशास्त्रविरुद्धमित्यर्थः । समाधत्ते — नमेति- "नयनतीर्थाय" इत्येतद्वचनं तीर्थकृताप्युन्यस्तं न तु नियत इति स्वतन्त्रागमस्य पुरुषकर्तृकत्वं सिद्धं वदितव्यम्, ननु भवतु पुरुषकर्तृकत्वेन तत्कर्तृकत्वासिद्धिर्न तावता भवदागमीयसिद्धि पुरुषकर्तृकत्वस्यापि तदप्रामाण्यप्रयोजकत्वादित्याशङ्कते—नचपुरुषे त्यादि । अस्य-आगमस्य । निमित्तम्-प्रयोजकम् । समाधत्ते- वक्तव्यमि । तत्रिपुरुषकर्तृकत्वं यदि तदप्रामाण्यप्रयोजकं तदा वेदानामपि पुरुषकर्तृकत्वेनाप्रामाण्यं दुर्वारमेव तद्भवतामिष्टमिति । ननु समानदियमापत्तिरस्माकं यदि वयं वेदानां पुरुषकर्तृकत्व- मभ्युपगच्छेम तदेव तु नाभ्युपगच्छाम इत्याशङ्कते-नचवेदेत्यादि । सिद्धान्ती समाधत्ते-पुरुषव्यापारेति-पुरुषस्योच्चारणात्मकव्यापारं विना कदाचिदपि वर्णानां शब्दे न वेदात्मकवचनश्रावणप्रत्यक्ष मनुभवन् स्यात्तत्र पुरुषकर्तृकत्वमवश्यं स्वीकरणीयमेवेतिभावः । ननु तदुपलब्धौ तदीयाऽऽनुपूर्वीनियतिभावाद् प्रयोजकत्वमभ्यु पगम्यत इति पुरुषव्यापारं विनापि न तदुपलब्धौ किञ्चि द्बाधकमिति चेत्तत्राह—आनुपूर्वीत्यादिना । आगमेऽपि तादृशानु पूर्वीनियमभावादेः समानतया पुरुषकर्तृकत्वप्रयोज्यमप्रामाण्य मशनोदितमवसेयमितिभावः ।

ननु भवद्भिरर्हत्कर्तृकत्वेनैवाऽऽगमस्य प्रामाण्यमभ्युपगम्यते तथा च नास्मन्मते तत्र प्रामाण्यं पुरुषकर्तृकत्वादित्याशङ्कते- मथार्हदित्यादिना—समाधानमाह निश्चितेत्यादि-शब्दगतं प्रामाण्यं निश्चितानिवरीतप्रत्ययोत्पादकत्वमेव तच्च स्वत एव तत्र स्वीकर्

णीयमिति नार्हद्वक्तृत्वमेव प्रामाण्यप्रयोजकमितिभाव । सावक माह-अन्यथेत्यादि-उक्तरूप प्रामाण्य यदि न स्वीक्रियेत तदा शब्दस्य प्रामाण्यमेवानुपपन्न स्यादितिभाव ।

१४-(मूलम्) स्यादेतत्, अर्हन्नेवागमस्य वक्तेत्या गमस्य केवल्युक्तत्व केवलित्वाचाम्य तदुक्तानुष्ठानफलत्व मितीतरेतराश्रयदोप, नक्षम्, वेदवक्तृष्वपि हिरण्यगर्भादिषु समानत्वात्, तेपामपि विशेषेण तदुक्तानुष्ठानफलत्वात्, अनादिमत्त्वादस्य तद्वन्त एव वक्तार इतिचेत्, इतरत्रापि समानमेवत्, अर्हतामप्यनादित्वाभ्युपगमात्, तेऽन्यवेदवक्त वेदवक्तार इतिचेत्, अर्हन्तोऽप्यन्यार्हद्वक्तागमवक्तार इति समानमेव, तदन्यार्हदुक्तत्वानपेक्षित्वेन तेषा तद्वक्तृत्वादस मानमितिचेत्, न, अनपेक्षित्वासिद्धे, तथैवानुपूर्व्याऽभि धानात्, अन्यार्हन्मुखाधीतागमवक्तारो न भवन्तीत्यसमान- मेवेतिचेत्, न, जातिस्मरणातिशयवेदवक्तृत्ववत्, केवल्याति शयतस्तदा तथाऽऽगमवक्तृत्वेऽन्यार्हन्मुखाधीतत्वस्याप्रयोज- कत्वात्, अन्यदा चान्यतद्वक्तृमुखाधीतत्वस्य तत्रार्हत्यपि समानत्वात्, अवेदत्वादागमस्यासमानमिति चेत्, न, अवेद पदागमे न्यायमार्गतुल्यतया प्रतिपादयितुमिष्टत्वात्, अन्यथा वेदस्याप्यनागमत्वात् नासदुक्तन्यायानुपातित्व- मिति वक्तु शक्यत्वात्। भवदागमप्रामाण्ये विगानमिति चेत् ? वेदप्रामाण्येऽपि तुल्यमेतत्, तथापि स एव प्रमाण नागम इतिचेत्, न, कोशपानादृते प्रमाणाभावात्, एव-

मितरेतराश्रयदोषानुपपत्तेश्चानुष्ठानफलत्वेनागमात् सिद्ध-
मर्हद इति।

आगमस्य पुरुषकर्तृकत्वस्वीकारेण पुरुषकर्तृकत्वप्रयोज्यस्या-
ऽऽगमस्य ग्रहणेऽपि तथैव (पुरुषकर्तृकत्व एव) अन्योन्याश्रय
दोषमुद्भावयति—स्यादेतदिति। दोषमुपपादयति—अर्हन्नेवागमस्ये
त्यादिना। अर्हन्—तीर्थङ्करदेव आगमस्य—कल्पसूत्रादेः वक्ता—
प्रकाशयिता आगमस्य—कल्पसूत्रादेः, केवल्युक्तत्वम्—केवलिप्रोक्त-
त्वम् केवलित्वात्—केवलज्ञानविशिष्टत्वात्, च—पुनः, अन्य-
केवलिनः सर्वस्य, तदुक्तानुष्ठानफलत्वम्—आगमोक्तानुष्ठान
प्रयोजनत्वम् इति हेतो, इतरेतराश्रयदोषः—अन्योन्याश्रयदोषस्तथा च
सिद्धाविशिष्टागमस्यार्हद्वक्तृकत्वमर्हतश्चागमानुष्ठानफलत्वमित्युभय
मपि न शक्यं स्वीकर्तुमिति समाधत्ते—नैवमित्यादिना।

हिरण्यगर्भादय एव वक्तारः इति वेदस्य हिरण्यगर्भादिप्रोक्त-
त्वेनाङ्गीकारे वेदोक्तानुष्ठानफलत्वमितीतराश्रयदोषस्य हिरण्यगर्भादि-
ष्वसत्त्वाऽप्रयोजकत्वमिव प्रकृतेऽप्यर्हदसत्त्वाप्रयोजकत्वमवसेयम्। ननु
हिरण्यगर्भादीनां वेदोक्तानुष्ठानफलत्वास्वीकारेण कुतोऽन्योन्याश्रय
इतिशङ्कायामाह—तेषामपीत्यादिना। एवञ्च हिरण्यगर्भादीनां तदुक्ता-
नुष्ठानफलत्वास्वीकारेणेतरेतराश्रयदोषवारणं भवतामनुपपन्नमिति
भावः। ननूभयोरस्ति वैषम्यम्, वेदस्यानादिमत्त्वात्तद्वक्तॄणां
हिरण्यगर्भादीनामप्यनादित्वस्वीकारात्, आगमवक्तुः केवलिनश्चा-
नादिमत्त्वाऽस्वीकारादित्याशङ्कते—अनादीत्यादिना, अस्य—वेदस्य,
तद्वक्तुः—अनादिमत्त्वमत। समाधत्ते—इतरत्रापीत्यादिना। इतरत्र—
अन्यत्र केवलिष्वपीत्यर्थः। एतत्—अनादित्वम्, समानम्—तुल्यम्।

आगमस्यानादिमत्त्वात्तदुवक्तृणामपि तद्वत्त्वस्वीकारात् । ननु भवद्भि रर्हतामनादित्वं न स्वीक्रियते इतिचेत्तत्राह-अर्हंत्यादिना । वेद वक्तृणामिवाऽऽगमवक्तृणामर्हतामप्यनादित्वस्वीकारात् समानताया बाधकाभावादित्यर्थः । ननु समानतायामस्तिबाधकमथापि हिरण्य गर्भादीनाम पवेदवक्तृत्वेदवक्तृत्वादित्याशङ्कते-तेऽन्यवेदेत्यादिना। ते -हिरण्यगर्भादय । अन्यवददवक्तृत्वेदवक्तार -अ ये वेदवक्तारोऽन्य वेदवक्तारस्तदुक्तारितो वेदा अन्यवेदस्तद्वदास्तेषां वक्तारस्तथा। समानता समथयति अर्ह्तमित्यादिना-अर्हतामप्य यार्हदुक्ताऽऽ गमवक्तृत्वस्वीकारेण समानताया बाधकाभाव इतिभाव ।

अन्ये च तदर्हतोऽन्यार्हन्तस्तैरुक्त आगमोऽन्यार्हदुक्तागमस्तस्य वक्तारस्तथति। न ह्यर्हतामागमवक्तृत्वस्वीकारेऽप्यन्यार्हदुक्तेय आगम स्तद्वक्तृत्वमनपेक्षितत्वान्न स्वीक्रियते इतिसमानता नास्तीत्याशङ्कते- तद्न्येत्यादिना । अयमाशय -हिरण्यगर्भादीनां स्वात त्र्येणान्यवेद वक्तृत्वानपेक्षितवेदवक्तृत्वं नास्ति तेषामर्हतां पुनरनन्यार्हदुक्तत्वान पेक्षितागमवक्तृत्वमेव स्वीक्रियते इतिवेदागमयोस्तदन्योक्तानपेक्षित्व कृतो विशेषो वर्तत एव सुतरां तद्वक्तृणामपि हिरण्यगर्भादीनामर्हतां मस्ति विशेष इति । समाधत्ते नेत्यादिना-अर्हतामप्यन्यार्हदुक्तागम वक्तृत्वस्वीकारेण तदुक्ताऽऽगमेऽन्यार्हदुक्तत्वानपेक्षितासिद्धे । तत्र हेतुमा-तथैवेत्यादि-यथैवानुपूर्व्या तद यैरर्हद्भिरुक्त आगमस्तथैवानु पूर्व्या तदर्हतामप्युक्तत्वात् तदन्यार्हदुक्तागमवक्तृत्वमेव स्वीकरणीय मिति नास्ति समानताया किञ्चिद्वैषम्यमिति । ननु हिरण्यगर्भादि कर्तृकवेदोपदेशकालावच्छेदेन हिरण्यगर्भादौ अन्यवेदवक्तृमुखाधी नत्व वदयक्तस्तत्त्वोभयमायति अर्हत्कर्तृकाऽऽगमोपदेशकालावच्छे देन तस्मिन्नागमवक्तृत्वसत्त्वेऽपि तदन्यार्हन्मुखाधीनत्वाभावान्नास्ति

समानतेत्याशङ्कते—अस्याहं सुखेत्यादिना— समाधत्ते—नेत्यादिना— ज्ञातिस्मरणातिशयेन यथा हिरण्यगर्भादौ वेदवक्तृत्वं तथाऽऽगमेऽपि दृश्यकाले केवलातिशयतोऽर्हत्यागमवक्तृत्वं स्वीकर्तुं शक्यत इति स्व- याद्गुणाधीनत्वस्य प्रयोजकत्वं न स्वीकरणीयम्। अन्यकाला वच्छेदेन तत्रार्हत्यन्यागमवक्तृगुणाधीनत्वमस्त्येवेति समानताऽभ्या हताऽवसेया। ननु हिरण्यगर्भादौ वेदवक्तृत्वस्य साधकत्वागमवक्तृ त्वस्य सत्त्वेनाऽऽगमस्य वेदभिन्नत्वादसमानतेत्याशङ्कते—अन्यदित्यादि —समाधत्ते—नेत्यादि—अर्हदुक्ताऽऽगमे वेदभिन्नत्वमस्माभिरपि स्वी क्रियते, नहि स्वस्मिन् स्वसादृश्यमस्मत काश्चिदपि सादृश्यस्य भेदघटितत्वात्, एवञ्च वेदभिन्नेऽप्यागमे न्यायमार्गानुसरणयोग्यत्व समानमेवेति भावः। ननु वेदागमयोर्भेदं स्वीकृत्य वेदभिन्ने आगमे कथं वदीय न्यायमार्गानुसरणया प्रतिपादनम् न्यायमार्गानुसरणाभावे च कथं समानमित्याशङ्क्य समाधत्ते—अन्यथेत्यादि—यदि वेद भिन्ने आगमे वदीयन्यायमार्गानुसरणता भवता नाभिमता तदा वेदस्याप्यनागमत्वान्नागमे वेदेऽपि नास्मदुक्तन्यायानुसारित्वमित्य स्माभिरपि वक्तुं शक्यत्वमवसेयम्।

अन्यथा—वेदभिन्ने आगमे न्यायमार्गानुसरणताप्रतिपादनानिष्टत्वे यथाऽऽगमस्यावेदत्वं तथा वेदस्याप्यनागमत्वं स्यादिति भावः। अथास्मदुक्तन्यायानुसारित्वाभावस्याऽऽगमे वक्तुं शक्यत्वात् अस्म दुक्तन्यायाननुसारित्वमेव भवदागमप्रामाण्ये दूषणमित्याशङ्कते— नास्मदुक्तेत्यादिना—समाधत्ते—यदप्रामाण्येत्यादि। यथैव भवदुक्त न्यायाननुसारित्वादस्मदागमेऽप्रामाण्यं तथैवास्मदागमोक्तन्यायाननु सारित्वाद् भवतां वेदेऽप्यप्रामाण्यमिति "यश्चोभयोः समो दोषः" इत्यादिन्यायेनैकतरस्य दोषोद्घाटनमनुचितमित्येकपाक्षिकन्यायानु सरणस्यापरप्रामाण्याप्रयोजकत्वमिति भावः।

अथोभयत्र न्यायमार्गतुल्यतायां समानतायामपि वेदस्यैव प्रामाण्यं युक्तं नत्वागमस्येत्याशङ्कते तथापीत्यादिना। कृतसुरापान स्योन्मत्तस्यैव तत्र वचनं प्रमाणं न पुनः प्रेक्षावतामितिभावः। उपसंहारमाह-एवमित्यादिना-एवम्-उक्तप्रकारेण। इतरेतराश्रय दोषानुपपत्तेः-आपादितस्य अन्योन्याश्रयदोषस्य अनुपपत्तेरसंघटनाद्वे नोऽओदनानुष्ठानफलतयाऽऽगमात् सर्वज्ञः सिद्ध इतिपूर्वोक्तरीतिप्रका रेणाऽऽगमप्रमाणं पदं न पूर्वपक्षिणः प्रास्ता इतिभावः ॥१४॥

इति सुविहिताग्रणी परमदार्शनिकाचार्यपुरन्दर श्री हरिभद्रसूरि विरचितायां सर्वज्ञसिद्धौ शास्त्रविशारद-कविरत्न-पीयूषपाणि पूज्यपादाचार्यमहाराजश्री विजयामृतसूरीश्वरकृतायां सर्वहिता ऽऽख्यायां व्याख्यायाम् आगमप्रमाणातिक्रान्तत्वरूपसर्वज्ञत्वप्रतिषेध पूर्वपक्षखण्डनाभिधं तृतीयं प्रकरणम् ॥



१५ (मूलम्)-उपमानगोचरातिक्रान्तत्वमपि न न्याय-सङ्गतम्, उपलब्धसर्वज्ञस्य हृद्गताशेषसंशयपरिच्छेदादिना तद्धन्योपलब्धौ तत्सादृश्यप्रतीतिसिद्धेः, अगृहीतगोगवयस्य गव्यप्यसिद्धेः। न चैतावता गोस्तद्गोचरातिक्रान्तत्वम्, अनभ्युपगमात्।

एवं प्रत्यक्षानुमानगोचरातिक्रान्तत्वं प्रतिपक्षिमण्डलेनापादितं युक्तिततिभिर्निराकृत्य भगवान् उपमानगोचरातिक्रान्तत्वमपि निरा कर्तुमुपक्रमते—उपमानगोचरेति

प्रमाणेन वेति वाच्यम् ? यद्यप्रमाणेन, सिद्धं साध्यते, तस्याप्रमाणेन ग्रहणानभ्युपगमात् ।

स-सर्वज्ञ केनचित् जनेन न-गृह्यते-उपलभ्यते इति य कथनमसिद्धम् तत्र कारणमाह-विकल्पानुपपत्तेरिति, विकल्पानुपपत्तिमेव दर्शयति-तथाहि-स तावदित्थं प्रष्टव्य, स सवज्ञ किं प्रमाणेन नोपलभ्यते उताप्रमाणेन न गृह्यते वेति ?, तत्र यदि द्वितीय पक्षस्तदा सिद्धसाधन भवताम्, सर्वज्ञस्य अप्रमाणेनोपलम्भस्यास्वीकरणात् ।

१७ ( मूलम् ) अथ प्रमाणेन, किं तद्ग्राहकेणोता तद्ग्राहकेणेति ?, न तावत् तद्ग्राहकेण, तस्य तद्ग्रहण विरोधात्, तथाहि-तद्ग्राहकं नच तद्गृह्णातीति विरुद्धमेतत् ।

अथ प्रथम पक्षोऽर्थात् प्रमाणेन स गृह्यते स इत्युच्यते तत्रापि विकल्पद्वयम्—किं तद्ग्राहकेण प्रमाणेन स न गृह्यते, उतातद्ग्राहकेण प्रमाणेन स न गृह्यते, इति, तत्र न तद्ग्राहकेण स न गृह्यते तद्ग्राहकस्य प्रमाणस्य तद्ग्रहणेन विरोधात्, तद्ग्राहकं प्रमाणं न च तद्गृह्णातीति विरुद्धमेतदवसेयम् ।

१८ ( मूलम् )-अतद्ग्राहकाग्रहणे तु तदभावासिद्धिः, तदभावेऽपि घटादिभावसिद्धेः, तथाहि-न घटादिग्राहकेण प्रमाणेनागृह्यमाणा अपि सन्तो नसन्त्येव घटादयः ।

यदि द्वितीय पक्षोऽर्थात्-अतद्ग्राहकेण प्रमाणेन स न गृह्यते इति, तदा तु सर्वज्ञस्याभावासिद्धिः, घटाग्राहकप्रमाणेन घटग्रहण

भावेऽपि घटादेरसित्वस्य सिद्धत्वात्, घटादिभावसिद्धिमुपपादयति—तथाहीति—घटादिमाहकेण प्रमाणेनागृह्यमाणा अपि सन्तो घटादयो न न सन्त्येव किन्तु सन्त्येवेतिलोकानुभवात्।

१९ ( मूलम् )-तद्ग्राहकं प्रमाणमत्र नास्तीति चेत् ? उच्यते, किं भवत एवोतादो सर्वप्रमातॄणामिति।

ननु लोकाना तत्र कथं सत्त्वेन सत्त्वप्रतीतिः तद्ग्राहकप्रमाणाभावादित्याशङ्कते—तदिति।

समाधत्ते—उच्यते इति—प्रमाणाभावेन सर्वज्ञसत्त्वं वारयन्तं पृच्छति किमित्यादि—किं भवत एव सर्वज्ञग्राहकं प्रमाणं नास्त्यथवा सर्वेषामेव प्रमातॄणामपीति।

२० ( मूलम् ) यदि भवत एव, सिद्धसाधनं, भवतः परोक्षत्वात् प्रवचनार्थानवगतेश्च। अथ सर्वप्रमातॄणामिति, अत्र न प्रमाणम्, तच्चेतसामप्रत्यक्षत्वात्, अन्यथा तदभावनिश्चयानुपपत्तेः, तत्प्रत्यक्षताभ्युपगमे च तत्संवेदनवत् तथाऽतीन्द्रियोपलम्भकत्वाभ्युपगमात् तदभावसिद्धिरेव।

तत्र यदि प्रथमः पक्षः स्वीक्रियतेऽर्थात् भवत एव तद्ग्राहकं प्रमाणं नास्तीत्यनुमन्यते तदा सिद्धसाधनमापद्यते, कुतः सिद्धसाधनमितिचेत्तदाह—भवत इति—तस्य भवतः परोक्षत्वेन तद्ग्राहकप्रमाणाभावो भवता सिद्ध एवेति तस्यैवसाधनादिति, य एव सर्वज्ञीयप्रवचनार्थावगन्ता तदीयमानसप्रत्यक्षविषयः सर्वज्ञोभवतीति

तदीयमेव मन सर्वज्ञमाहक युक्तम्, भगवान्तु न तदीयप्रवचनाथा वगतेति कुतो भगवतस्तद्ग्राहक प्रमाणमित्याह-प्रवचनेति—अथ सर्वप्रमातृणा तद्ग्राहक प्रमाण नास्तीतिमन्यते तदपि न समीचीनमित्याश—अत्रेति—अत्र-सर्वप्रमातृणा तद्ग्राहकप्रमाणाभाव न प्रमाणम्-प्रमाण नास्तीत्यर्थः, तत्र हेतुमाह-सर्वेतसामिति-सर्व प्रमातृणा तद्ग्राहकप्रमाणाभावनिर्देश प्रतीतु शक्यो यदि सर्व प्रमातृसम्बन्धिना चेतसा प्रत्यक्ष भवेत तदेव तु नास्ति-सर्वेत सामप्रत्यक्षत्वात् इति। सर्वप्रमातृचेतसा-प्रत्यक्षत्वस्वीकार च सर्वज्ञाभावनिश्चयानुपपत्तिरित्याह— अन्यथेति अन्यथा-सर्वप्रमातृ चेतसामप्रत्यक्षत्वाभाव प्रत्यक्षत्वस्वीकारे इति यावत्। तद्ग्राहक प्रमाणमत्र नास्तीति निश्चयो न स्यादिति। सकलसचेतन्त करण-साक्षात्काराङ्गीकारे तु तथाविधविशिष्टानुभवमनुभवतो योगिन पुन रतीन्द्रियार्थप्राप्तिस्वीकरणात् सर्वज्ञसद्भावसिद्धि र्व्याहता भवेदेवति।

२१ ( मूलम् )-प्रधानादीनामप्य च प्रतिषेधानुपपत्तित तत्सत्तापत्तेर्यत्नुनिश्चिदेतन्निति चत्, न, स्वतोऽदर्शनादतीन्द्रियोपलम्भकपुरुषवचनत औत्सुक्यानुपपत्तेश्च तत्प्रतिषेधप्रसिद्धे, असर्वज्ञेन तद्ग्रहणमपि न युक्त्युपपन्नमितिचेत्, न, हृद्गताशेषसशयच्छेदादिना तद्ग्रहणोपपत्ते ।

प्रतिवन्दीमापाद्य प्रतिषेधयति प्रधानेत्यादिना—पूर्वोक्तप्रकारेण प्रकृतिप्रभृतीनामनभिमतानामपि तत्त्वाना प्रतिषेधो दु शक स्यात, तथा च तेषामपि सत्ता दुनिवारा भविष्यतीति प्राक्प्रतिपादित मखिल निरर्थकमेवेतिचेत्, न, प्रधानादीना प्रतिषेधो न दु शक, यतश्च तेषा स्वतो दर्शन नास्ति, नचातीन्द्रियार्थदर्शनास्तान प्रति पादयन्ति, नापि ते चित्तौत्सुक्य जनयन्तीति ।

ननु च स्वयमसर्वज्ञः स कथं सर्वज्ञं जानीयादिति तामर्थेहीन जनन सर्वज्ञग्रहण युक्तिमद्गतमित्याशङ्कते–असर्वज्ञेनेति–समाधत्ते–नेति–हृदयगतसमस्तसंशयोच्छेदवत पुरुषस्य सर्वज्ञज्ञानमुपपद्यते इति भाव ।

७२–( मूलम् ) असम्पूर्णवैयाकरणादिभिरप्यवगतकति-पयपृष्टसूत्रादिकथितयथावस्थितार्थतत्त्वैः सम्पूर्णवैयाकरणादि-ग्रहणदर्शनात्, सर्वत्र तथा व्यवहारसिद्धेः, अन्यथा तदु-च्छेदप्रसङ्गात् ।

हृद्गताशेषसंशयोच्छेदवत कथं सर्वज्ञज्ञानमित्याशङ्का समुचित दृष्टान्तोपस्थापनद्वारेण निरस्यति–असम्पूर्णेति, अवगत कतिपयानां कतिपयेभ्यो वा पृष्टानां सूत्रादीनां कथित यथावस्थितमर्थतत्त्वं यैस्तैस्तथा । इदमत्र तत्त्वम् यथा केचिदधिगतव्याकरणतत्त्वा अपि स्वबुद्धिविषयतामनायात किञ्चिदर्थतत्त्वं कांश्चिद्व्याक-रणाधिकोक्तपदान पृच्छन्ति, ते च महाभागा संशयापन्नस्य पृष्टस्य सूत्रादेर्यथावस्थितमर्थतत्त्वमस्खलित प्राश्निकान् प्रतिपादयन्ति तदनन्तरं च ते प्राश्निकास्तान् सम्पूर्णवैयाकरणान् मन्यन्ते, तथैव स्वज्ञानाविषयत्वमपि पदार्थं कांश्चिदनुयुज्य ततोऽभीप्सितं तत्त्वं यथायथमवबुध्य तान् प्रथमगणभृच्चरमतीर्थकृतमिव सर्वज्ञानवत्त्व मन्येरन्निति । अयं भाव —अल्पाध्ययनजनितव्याकरणादिविषयक परिमितज्ञानवद्भिर्यथा तत्तच्छास्त्रविषयकविशिष्टज्ञानवन्तो वैया करणादय प्रश्नादिद्वारा वैयाकरणादित्वेन ज्ञायन्ते परिचीयन्ते च तथैव हृदयगततत्तत्संशयोच्छेदवद्भिरल्पज्ञै समस्तपदार्थज्ञाता सर्वज्ञो ज्ञायेत परिचीयेत चेति । ननु तादृशैरसम्पूर्णवैयाकरणादिभि

सम्पूर्णवैयाकरणादयो ज्ञायन्ते इत्यत्रैव न किमपि मानमिति कथमसिद्धेन दृष्टा तेन दार्ष्टान्तिकस्य सिद्धिरितिचेत्तत्राह–सर्वत्रेति। सर्वत्र तेन प्रकारेण वैयाकरणादिव्यवहारदर्शनात्, तथा च व्यवहार एव सर्वज्ञ सर्वज्ञपदवाच्य इत्यत्रापि शक्तिग्राहक इतिभाव । तथा व्यवहारोऽपि न भवतीतिचेत्तत्राह–अन्यथेति–अन्यथा–तद्व्यवहारासिद्धौ सवज्ञोच्छेदप्रसङ्गात् ।

२३–( मूलम् ) अब्राह्मणेन ब्राह्मणपरिज्ञानानुपपत्ते, तत्त्वस्य कथनस्य सर्वज्ञेऽपि तुल्यत्वात् इद्धताशेषसशयपरिच्छेद्यपीदानी न कश्चिदुपलभ्यते इतिचेत्, सत्यमिदम् ।

इष्टैवाऽऽपत्तिरियमितिचेत् तत्राह्–अब्राह्मणेनेति–अब्राह्मणोऽपि ब्राह्मण न जानीयात् इत्यापत्तेरिष्टापत्तिकर्तुमशक्यत्वादितिभाव । ब्राह्मण स्वयमब्राह्मणाय ब्राह्मणमात्मान निवेदयेदितिचेदुच्यते तत्राह–तत्त्वस्येति–तर्हि सवज्ञोऽप्यसर्वज्ञाय सर्वज्ञमात्मान निनिवेदयेदिति सर्वज्ञपक्षेऽपि तुल्यत्वादितिभाव ।

अस्तु–इद्धताशेषसशयपरिच्छेदादिनोपलब्धसवज्ञस्य तदन्योप लब्धौ तत्सादृश्यप्रतिपत्त्या तदन्यसादृश्यसिद्धया सर्वज्ञसिद्धि सम्पादिता किन्तु सम्प्रति तादृशो जन एव कश्चिन्नोपलभ्यते इति सर्वमनुपपन्नमित्याह–इद्धतेति । एतत्कालावच्छेदेन तदुपलम्भा भावेऽपीष्टापत्तिमभ्युपेत्याह–सत्यमिदमिति ।

२४–( मूलम् ) इहेदानी कालदोषतस्तदनभ्युपगमात्, तदानीमासीदित्यपि कथ ज्ञायत इति चेत्, तदुपलब्धसम्प्रदायाऽविच्छेदेन ।

इह-लोके, इदानीम्-सम्प्रति, कालदोषेण-कलियुगात्मक कालप्रभावात्, तदनभ्युपगमात्-इष्टताशेषसाध्यपरिच्छेदिनोऽस्वीकारात्। ननु कालदोषेण इदानीं तादृशपुरुषानभ्युपगमेऽपि तदानीं तत् तदीयमस्तित्वं स्वीकृत्य सर्वज्ञसिद्धिरभिमता भवताम् परं तु तदानीन्तनं तदीयमस्तित्वमपि प्रमाणाभावादसिद्धम् तत्कथं भवदभिलषितसिद्धिरित्याशङ्क्य-वदति। तदानीम्-सर्वज्ञावस्थानकाले (स-इष्टताशेषसाध्योच्छेदी) समाधत्ते-तदुपलब्धेति-तस्मात्-इष्टताशेषसाध्योच्छेदिनः सकाशात् उपलब्ध-समधिगतो यः सम्प्रदायो गुरुपरम्परा तस्य-अविच्छेदेन-विच्छेदाभावेन 'स आसीदिति ज्ञायते" इत्यत्र सम्बन्धः कार्यः। ननु सम्प्रदायाविच्छेदेन भूतकालिकतादृशपुरुषास्तित्वं साधनमनुपपन्नम् दुष्टसम्प्रदायाविच्छेदेनैव सत् साधयितुं शक्यम् सम्प्रदायशुद्धतायामेव च प्रामाण्यं नास्तीत्याशङ्कते-नन्विति।

२५-(मूलम्) न स दुष्टसम्प्रदाय इत्यत्र किं प्रमाणमितिचेद्, ब्राह्मण्याधिगमसम्प्रदायेऽपि समानमेतत्, तद्व्यवहारबाधाभावदर्शनात्समानमितिचेत्, न, इतरत्राप्युभयभावात् समानमेव।

स-तदुपलब्धसम्प्रदायः, दुःसम्प्रदाय-दुष्टः सम्प्रदायः, न-भवति। समाधत्ते-ब्राह्मण्येति-ब्राह्मण्याधिगमसम्प्रदाये-तदधिगमगुरुपरम्परायाम्, अपि एतत्-दुःसम्प्रदायत्वे प्रमाणाभावप्रतिपादनमिदम्। समानम्-तुल्यम्, ब्राह्मण्याधिगमसम्प्रदायेऽपि तस्य पर्यनुयोगस्य तुल्यत्वादिति भावः। ननु ब्राह्मण्याधिगमसम्प्रदायस्य दुःसम्प्रदायत्वे अध्ययनादितद्व्यवहारबाधाभावदर्शनं प्रमाणमुप

लभ्यते इति समानताव्याघात इत्याशङ्कते–तद्वयवहारेति । तद्वय वहारे अध्ययनादिवाक्षण्याधिगमसम्प्रदायव्यवहार बाधाभावदर्शनात् –अवाधितत्वज्ञानात्, असमानम्–अतुल्यम् । समाधत्ते—नेति– इतरत्रापि–इद्वृताशेषसदायोच्छेदेऽनुपलब्धसम्प्रदायेऽपि । उभयभावात्–व्यवहारबाधाऽभावोभयभावात् ननु इद्वृताशेषसदायोच्छेदेऽनुपलब्ध-सम्प्रदाये बाधारहित कीदृशो व्यवहार इत्याशङ्क्य समाधत्ते–दृश्यतेचेति ।

२६-(मूलम्) तद्दृश्यते च वेदाध्ययनादिवत्तत्वम स्वारस्थापनादिविरोधारहितो व्यवहार इति ।

यथाऽगृहीतगोगवयस्यापि जनस्य इते गोरुपमानगोचरातिक्रान्तत्वाभाव इव सर्वज्ञस्यापि नोपमानगोचरातिक्रान्तत्वाभाव इत्येतन्निगमयति–अगृहीतेति ।

२७-(मूलम्) अगृहीतगोगवयस्यापि गोरिव नोप मानगोचराक्रान्तिन्तत्वमत्र, एतेनासर्वज्ञपुरुषसाधर्म्यादसर्वज्ञ-त्वोपमानमत्र तत्र युक्तमिति यदुच्यते परैस्तदपि प्रत्युक्तम् ।

ननु भवेदसर्वज्ञमादृश्यज्ञानमेवोपमानम् । असर्वज्ञपुरुषसाध र्म्यात् असर्वज्ञत्वात्मकोपमानमेव तत्र समुचित इत्यमर्वज्ञसदृश सर्वज्ञ इत्याकारकज्ञानेन असर्वज्ञत्वात्मकतत्सादृश्यस्यसर्वज्ञेऽवगमादिति तस्मिन्नप्यसर्वज्ञत्वसिद्धया सोऽप्यसर्वज्ञ एवेति परेषा मतमपाकरोति–एतेनेति । प्रत्युक्तिप्रकारमुपपादयति नचोपमानोपमेयेति ।

२८-(मूलम्) तथोपमानोपमेययो प्रसिद्धसाधारण-धर्मातिरेकेण सर्वधर्मैरुपमानप्रवृत्ति ।

उपमानोपमेययोश्चन्द्रमुखयो प्रसिद्धाऽऽह्लादकत्वादिसाधारण धर्मातिरेकेण चन्द्रत्वाऽऽकाशगतत्वादिसर्वधर्मैरुपमानप्रवृत्तिरिति । सर्वधर्मप्रयोज्योपमानाप्रवृत्ति दृष्टान्तेन समर्थयति-यथाशम्बीति ।

२९-(मूलम्) यथा शम्बी श्यामा देवदत्ता, तत्र हि साधारणश्यामत्वावच्छिन्नरूपतैव केवलं प्रतीयते नान्य शम्बीगता धर्मा, तदभ्यारोपे तु शम्बीरूपतैव स्यात् । एवं चामरेशा पुरुषा उपमानम्, उपमेयो विरचित पुरुष, एतयो प्रसिद्ध साधारणो धर्म इति वाच्य, परकृत्य-पुरुषत्वादिरितिचेत्, न, सिद्धसाध्यतापत्ते ।

शम्बीदेवदत्तयो प्रसिद्धो य साधारणो धर्म श्यामत्वम् तदवच्छिन्नरूपतैव प्रतीयते देवदत्तायाः, न पुनरन्येऽपि शम्बीगता तैक्ष्ण्यादयो धर्मास्तत्र प्रतीयन्ते, तैक्ष्ण्याद्यात्मकसादृश्याध्यारोपे शम्बीरूपतैव देवदत्तायामापद्येत, एवं चामरेशा पुरुषा उपमानम्, उपमेय पुरुषविशेषस्तयो प्रसिद्धेन केनचित् साधारणेन धर्मेण वाच्येन भवितव्यम् तद्धर्मप्रयोज्यैवामरेशसादृश्य सिद्धिरवसेया । ननु नैतावता तस्मिन सर्वेशतासिद्धि, परकृत्य पुरुषत्वादिना साधारणधर्मेणैव सादृश्यसिद्धौ तद्धर्मस्य च सर्वज्ञता-प्रयोजकत्वाभावात् इत्याशङ्क्य-परकृत्येति-समाधत्ते-नेति । परकृत्य पुरुषत्वादिकं न साधारणधर्मतया शक्यं स्वीकर्तुम् सिद्धस्य साध्यत्वापत्तेरिति ।

सिद्धसाध्यत्वमेव कथमित्याशङ्का वारयति-यथेति ।

३०-( मूलम् ) यथा पुरुषो वक्ता तथाऽयमपीत्यभ्युपगमात्, एतत्साधर्म्यसिद्ध्या तत्रासर्वज्ञत्वस्यापि सिद्धिरिति चेत् न,-देवदत्तायामपि श्यामत्वसिद्धे तैक्ष्ण्यादिभावप्रसङ्गात्।

न वक्तृत्वसर्वज्ञसाधर्म्यप्रयोज्यवक्तृत्वान्यसिद्ध्या तत्रासर्वज्ञत्वस्यापि सिद्धिरिति शङ्कते-एतत्साधर्म्येति । समाधत्ते नेति । यदि वक्तृसाधर्म्यसिद्ध्याऽसर्वज्ञत्वं स्वीक्रियते भवता तर्हि श्यामत्वात्मकसाधर्म्यप्रयोज्यतैक्ष्ण्याभावोऽपि देवदत्तायामापद्येतेतिभाव । देवदत्तायाश्च तैक्ष्ण्यादिभावो यथा न स्वीक्रियते तथा सर्वज्ञेऽन्य सर्वज्ञत्वादिकमिति भाव । ननु देवदत्ताया तैक्ष्ण्यादिभावापादन सर्वथाऽयुक्तम प्रत्यक्षविरोधात् "देवदत्ता तीक्ष्णा न" इत्यादिबाधनिश्चयस्य प्रत्यक्षात्मकस्य विरोधिन सत्त्वात्, तद्वत्ताबुद्धि प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकताया पूर्वमुक्तत्वादित्याशङ्कते-दृष्टविरोधेति ।

३१-( मूलम् ) दृष्टविरोधादप्रसङ्ग इति चेत् इतरत्र तद्विरोधाभावः केन सिद्ध इति वाच्यम्, तद्भावोऽपि केन सिद्ध इति चेत् ।

दृष्टविरोधात्-दृष्टेन प्रत्यक्षेण विरोध सहानवस्थानादिलक्षणो दृष्टविरोधस्तस्मात्,

"दृष्टमनुमानमाप्त-वचन च सर्वप्रमाणसिद्धत्वात् ।
त्रिविध प्रमाणमिष्ट, प्रमेयसिद्धि प्रमाणाद्धि ॥ ४ ॥"

इतिसांख्यकारिकायां दृष्टपदस्य प्रत्यक्षार्थकत्वमवसेयम् । समाधत्ते-इतरत्रेति—इतरत्र-अन्यत्र सर्वज्ञ इति यावत् । तद्वि

रोधाभाव –प्रत्यक्षविरोधाभाव, येन–निमाश्मयेन हेतुना सिद्धो निष्पन्न इति वाच्य वक्तव्य भवता दृष्टविरोधापादकेनेति शेष, एवञ्च त्वयापि दृष्टविरोधाभावो नोपपादयितु शक्यत इति "यश्चोभयो समो दोष परीहारोऽपि तादृश । नैक पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायाच्च कश्चिद्दृष्टान्तदार्ष्टान्तिकयोर्विशेष इतिभाव । ननु "दवदत्ता न तीक्ष्णा" इत्यादिप्रतीतेस्तत्र दृष्टविरोधो दृश्यते भवता को दृष्टविरोध कथ वा ? "सर्वज्ञो नासर्वज्ञ" इत्यस्य "सर्वज्ञ सर्वज्ञ" इत्यथकतया "घटो घट" इतिवच्छाब्दबोधाजनकत्वेनाप्रतिबन्धकत्वादित्याशङ्कते – तद्भावोऽपीति । तद्भाव –दृष्टविरोधभाव, दृष्टविरोधतेतियावत् समाधत्ते– अविरुद्धेति ।

३२-(मूलम्) अविरुद्धविधेस्तेन विरोधेन सहावस्थाना भावनियमाभावतस्त सम्भवोपपत्ते, अविरुद्धश्च ज्ञानप्रकर्षो वक्तृत्वाभ्निेति ।

विधिपदस्य कार्य्यपरकतया अविरुद्धविधे –अविरुद्धकार्य्यस्य, तेन विरोधेन–दृष्टेन विरोधेन सह–सार्द्धम् अवस्थानाभावनियमा भावत –अवस्थान न भवतीति नियमाभावात्, तत्सम्भवोपपत्ते – दृष्टविरोधसम्भवोपपत्तेरितिशब्दार्थ । अयमाशय —यद्येप नियमो भवेत् अविरुद्धविधे फलत साधारणधर्मस्य विरुद्धेनान्यतरेण सन्निधान नास्तीति तर्हि ज्ञानप्रकर्षस्य असर्वज्ञत्वविरोधिना सर्वज्ञत्वेन सहावस्थानमसंभवित भवेत् स एव नास्तीति ज्ञान प्रकर्षस्य सवज्ञे सवज्ञत्वेन सहावस्थाने बाधकाभाव इति सङ्क्षेप ।

ननु कोऽसावविरुद्धविधिर्यस्य तत्र विरोधेन महात्मान नियमाभाव इत्याकाङ्क्षायामाह—अविरुद्धश्चेति—वस्तुत्वाग्निनेत्यत्र तृतीयार्थे प्रयोज्यत्वं तथा च वस्तुत्वादिप्रयोज्य ज्ञानप्रकर्ष ज्ञानाधिक्यमितियावत् । एवञ्च ध्वस्ताशेषसंशयोच्छेदिन पुरुषस्य मनुजस्य च ज्ञानप्रकर्ष साधारणो धर्मोऽवसेय, तादृशसाधारण धर्मप्रयोज्य "तेन सदृशोऽसौ' इति सादृश्यप्रवृत्तिरवसेयेति ॥

इति परमदार्शनिकाचार्यपुरन्दरश्रीहरिभद्रसूरिविरचितायां
'सर्वज्ञसिद्धौ' शास्त्रविशारद कविरत्न पूज्याचार्यदेव-
श्रीविजयामृतसूरीश्वरकृतायां 'सर्वहिताऽऽख्यायां'
व्याख्यायाम् 'उपमानप्रमाणातिक्रान्तत्वरूप
सर्वज्ञताप्रतिषेधपूर्वपक्षखण्डनाभिध'
चतुर्थं प्रकरणम् ॥



## अर्थापत्तिगोचरातिक्रान्तताखण्डनम्

उपमानगोचरातिक्रान्तत्वखण्डनानन्तरमवसरसङ्गत्यार्थापत्तिगोचरातिक्रान्तत्व पूर्वपक्षिभिरापादितञ्च निरस्तुमुपक्रमते— अर्थापत्तिगोचरेत्यादि ।

२३-(मूलम्) अर्थापत्तिगोचरातिक्रान्तत्व युक्त्यनुपपन्नमेव, "अग्निहोत्र जुहुयात् स्वर्गकाम" इत्यादौ दृष्टस्य हवनादे श्रुतस्य च स्वर्गादेरर्थस्य तत्साध्यसाधनसम्बन्धज्ञातारमन्तरेणानुपपत्ते, अशक्यश्चाय पुरुषेण ज्ञातुमृतेऽतीन्द्रियार्थदर्शनात् ।

भवदापाभिमतार्थापत्तिगोचरातिरात्वं न युक्तियुक्तम्, यतो हि यद्यर्थापत्तिगोचरत्वमुपपन्नं स्यात्तदा तदतिरात्वकथामनुचितम्, अस्ति च तत्रार्थापत्तिगोचरत्वमित्याशयेनाह— अग्निहोत्रं जुहुयात् स्वर्गकाम " इत्यादि—अयमाशय –" अग्निहोत्रमित्यादौ दृष्टहवनादेरदृष्टस्वर्गादिफलकत्वकल्पनं तावदनुपपन्नं यावत्तयो (हवनादिस्वर्गयो) साध्यसाधनभावसम्बन्धज्ञाता कोऽपि न स्यात्, सति तादृशि पुरुषे तदुपदेशनादिद्वारेणान्योऽपि हवनादे स्वर्गादिफलकत्वमभ्युपगच्छेत् स च तादृशतयो सम्बन्धोऽतीन्द्रियार्थदर्शनं विना पुरुषेण ज्ञातुमशक्य एव अतीन्द्रियार्थदर्शनमन्तरेण तादृशसम्बन्धज्ञानमुपपद्यते, यश्चातीन्द्रियार्थद्रष्टा स एव सर्वज्ञ इति सकलज्ञस्यार्थापत्तिगोचरत्वं श्रुतिपर्यालोचनातोऽलक्ष्यवति भवदुक्तमप्रामाणिकम् । ननु सर्वोऽपि स्वस्मात्प्राचीनात् पुरुषात्तयोस्तादृश सम्बन्ध जानीयात किं सर्वज्ञकल्पनयेत्याशङ्कते—अपरस्मादित्यादि । समाधत्ते–सोऽपीत्यादिना—

३४–(मूलम्) अपरस्मात् पुरुषात् इति चेत्, सोऽपि तेन तुल्य नैव जातीयकेष्वतीन्द्रियेष्वर्थेषु तज्ज्ञानप्रामाण्यमुपैत्यन्धानामिव ज्ञानं रूपविशेषेष्विति, एतेनानादिवृद्धसम्प्रदायः प्रत्युक्त ।

यस्मात्पुरुषात् तं सम्बन्ध जानीयात सोऽपि पुरुष सम्बन्धाज्ञात्रा पुरुषेण तुल्य एव, स्वर्गादिष्वतीन्द्रियेषु वस्तुषु तादृशपुरुषस्य ज्ञानं रूपविशेषेष्वन्धानां ज्ञानमिव प्रमाणं न भवितुमर्हतीति सर्वज्ञोऽनायत्यापि स्वीकार्य एव भवताम् । एतेन–अपर

पुरुषज्ञानाऽप्रामाण्यस्वीकारेण, अनादिवृद्धसम्प्रदाय –अनादिवृद्ध परम्परावादी, प्रत्युक्त –निरस्त । निरासे हेतुमाह–सर्वेषामेवेति—

३५–(मूलम्) सर्वेषामेवात्र वस्तुन्यन्धतुल्यत्वात्, अधिकृतवचनादेवासौ विज्ञायत इतिचेत्, न, वाक्यार्थप्रतिपत्तावपि तन्निश्चयानुपपत्ते, लौकिकवाक्य क्वचित्तज्ज्ञानेऽप्यर्थतथाभावदर्शनात्, तस्य पुरुषबुद्धिप्रभवत्वेन तदायत्तो ऽर्थातथाभावो नैवमस्य अपौरुषेयत्वादिविचेत् ।

सर्वेषामपि पूर्वपूर्वपुरुषाणामतीन्द्रिये स्वर्गादौ वस्तुन्यन्धतुल्यत्वादित्यर्थ । ननु "अग्निहोत्रं जुहुयात् स्वर्गकाम" इतिवचनप्रामाण्यादेव दृष्टश्रुतयोस्तादृश सम्बन्ध स्वीक्रियता किमतीन्द्रियार्थद्रष्ट्रा सर्वज्ञेनेति शङ्कते–अधिकृतेत्यादि—समाधत्ते वाक्यार्थेत्यादि–आकाङ्क्षा योग्यताऽऽसक्ति–तात्पर्यज्ञानसमवहितपदार्थोपस्थित्या वाक्यार्थबोधसम्भवेऽपि तादृशसम्बन्धनिश्चयानुपपत्ते । तत्र हेतुमाह लौकिकेत्यादि–लौकिकवाक्ये कुत्रचित् वाक्यार्थप्रतिपत्तावप्यर्थऽवास्तविकत्व (प्रमात्मकज्ञानविषयत्वाभाव) दर्शनात् प्रकृतेऽपि सर्वज्ञस्वीकारम् तरेण तन्निश्चयानुपपत्तिरितिभाव । ननु लौकिकवाक्यस्य पुरुषबुद्धिप्रभवत्वेन यथार्थज्ञानजनकत्व माऽस्तु तस्य तदायत्तत्वात्, प्रकृते तु न तथा भवितुमर्हति तस्य वाक्यस्यापौरुषेयत्वादित्याशङ्कते–तस्यपुरुषबुद्धीत्यादिना–समाधत्ते–नेत्यादिना—

३६–(मूलम्) न, एवमप्यधिकृतभेदवत्तदर्थभेदाशङ्कापत्ते, प्रदीपवत् स्वार्थप्रकाशनात् नापत्तिरितिचेत्, न,

मन्दीपार्थवद्विशेषेण तदर्थप्रतिपत्त्यसिद्धेः, सङ्केतान्नेयस्या तदर्थोपलब्धेः, तत्स्वभावत्वादनकार्थत्वाच्च तस्मादपि इतिचेत् न, तथाविरुद्धार्थानुपपत्तेः ।

वचनस्यास्यापौरुषेयत्वेऽप्यधिकारिभेदादधिकृतवचनभेदवत्-दयभेदानामाशङ्कायत्याऽपौरुषेयत्वस्वीकारेऽपि नोपानुद्धार इति भावः । अथ प्रदीपो यथा स्वात्मानमर्थं पदार्थान्तरं च प्रकाशयति तथेदमपि वचनं वाक्यार्थबोधं दृष्टश्रुतपदार्थसम्बन्धं च बोधयेदिति पूर्वपक्षी दृष्टान्त-प्रदीपार्थवदित्यादि-यथा प्रदीपादर्थविशेषस्य प्रकाशो न तथाऽपिच्तवचनादर्थविशेषस्य कस्यचिदवबोध इतिभावः । ननु कथमथविशेषस्य न भवेद्बोध इति तत्राह-सङ्केतेति-एकस्य शब्दस्यानेकस्मिन्नर्थे सङ्केतदर्शनाद्यथाऽनेकेषामर्थानामसति प्रकरणादिज्ञानेऽभिधयैव बोधो भवति तथाऽधिकृतवचनादप्यनेकधा ऽर्थोपलब्धिसम्भवादिति भावः ।

ननु तदर्थबोधकस्वस्वभावत्वादकार्थत्वाच्चाधिकृतवचनस्य न कश्चिद्दोष इत्याशङ्कते-तत्स्वभावेत्यादि-समाधत्ते-नेत्यादि । यदि तदर्थबोधकत्वस्वभावत्वमेकार्थत्वञ्चाधिकृतवचनस्याभ्युपगम्येत तदा विरुद्धार्थबोधकत्वानुपपत्तिरितिभावः । ननु जायतामधिकृतवचनस्य विरुद्धार्थबोधकत्वं का क्षतिरितिचेत्तत्राह-दृश्यते इत्यादिना ।

३७-(मूलम्) दृश्यते च 'न सर्वविषयस्य' इत्यादौ सङ्केतभेदेन तदास्तित्वविरुद्धार्थप्रकाशनमिति, नास्तित्वमेव तत्राविपरीतमिति चेत्, न,

"स सर्वविषयः" इत्यादौ सङ्केतभेदेन सर्वज्ञारितत्वविरुद्धार्थप्रकाशनदर्शनात् अत्रापि विरुद्धार्थप्रकाशनस्यैवणीयत्वाद्विरुद्धार्थानुपपत्ते सिद्धत्वादिति भाव । समाधत्ते-इतरेत्यादि ।

३८-( मूलम् ) इतरप्रकाशानुपपत्ते, प्रदीपेन्दीवराक्तप्रकाशवदुपपत्तिरिति चेत्, न, अविशेषेण तत्प्रकाशनप्रसङ्गात्,

यद्येव तद्‌इतरार्थप्रकाशनानुपपत्ति स्यादेवेति भाव । ननु प्रदीपेन यथा स्वीयरक्तताया समीपस्थेन्दीवरसम्बन्धिन्या रक्तताया अपि प्रकाशन निधीयते तथा प्रकृतेऽपीतरप्रकाशनोपपत्तेर्ने प्रागुक्तानुपपत्तिरित्याशङ्कते – प्रदीपेन्दीवरेत्यादि-समाधत्ते – अविशेषेणेत्यादिना-प्रदीपाद्यथा सामान्यत उभयसम्बन्धिन्या रक्तताया प्रकाशन तथाऽविशेषेणेतरार्थप्रकाशनप्रसङ्ग स्यादिति भाव । ननु प्रदीपेन्दीवररक्तप्रकाशनमदृष्टदोषादुपपत्तुमर्हति न तावता प्रकृतेऽप्यविशेषेणेतरप्रकाशनप्रसक्तोऽन्यदृष्टदोषाभावादित्याशङ्कते—अदृष्टेत्यादिना-समाधत्ते-नेत्यादिना—

३९-( मूलम् ) अदृष्टदोषात् तत् तथा प्रकाशनमिति चेत्, न, इतरत्राप्यविश्रम्भप्रसङ्गात्, तदेवादृष्टदोषात् नेतरदिति निश्चायकप्रमाणाभावात्, अतीन्द्रियार्थत्वाद् तत्साक्षात्कारिणश्चानभ्युपगमात् ।

अदृष्टदोषात् प्रदीपेन्दीवररक्तप्रकाशनमधिकृत्य वचने चादृष्टदोषाभावाविशेषेणार्थप्रकाशनमित्यत्र विश्वासाभावप्रसङ्ग इति भाव । अविश्रम्भप्रसङ्गे हेतुमाह-तदेवादृष्टदोषादित्यादिना-प्रदीपेन्दीवररक्तप्रकाशोऽदृष्टदोषाद्भवति प्रकृते तु नेतरार्थप्रकाशनमित्याकारक

निश्चयजनकप्रमाणाभावादितिभाव । ननु तन्निश्चायक प्रत्यक्षादिक किमपि प्रमाण भविष्यतीत्याशङ्का निराकरोति-अतीन्द्रियार्थत्वा दित्यादिना-तस्यार्थस्यातीन्द्रियत्वात् अतीन्द्रियार्थसाक्षात्कारिण सर्वज्ञस्य चास्वीकारात्पूर्वोक्तनिश्चायकप्रमाणाभाव इतिभाव, तावता किमित्याह-तद्व्यतिरेकेण चेत्यादि ।

४०-( मूलम् ) तद्व्यतिरेकेण च तद्विशेषावगमोपाया-भावादिति समाश्रीयतामतीन्द्रियार्थसाक्षात्कारी, तदभावे सतीष्टार्थासिद्धिरिति, तदभावेऽप्यतादृशस्यातीन्द्रियार्थत्वात् तद्विशेषावगमोपायाभाव इतिचेत्,

तादृशनिश्चायकप्रमाणाभावेन च हेतुना विशेषेणार्थविबोधो पायाभाव इत्यत्रामेनापि तादृशातीन्द्रियार्थसाक्षात्कारी सर्वज्ञ समाश्रीयताम् । कथमितिचेत्तत्राह तदभावे इत्यादिना । सर्वज्ञा-भावे सतीष्टस्यार्थस्य सिद्धिन भवति कथमपीति भाव । ननु स्वीक्रियतामतीन्द्रियार्थसाक्षात्कर्ता सर्वज्ञस्तावताऽपि नेष्टसिद्धि, असर्वज्ञस्य वस्तुतीन्द्रियार्थत्वात्तदीयविशेषावबोधे उपायस्यादर्शना दित्याशङ्कते-तद्भावेऽप्यतादृशस्येत्यादि-समाधत्ते-नेत्यादि ।

४१-( मूलम् ) न, शब्दस्य प्रयोगकुशलप्रयुक्तस्य क्वचित् तदवगमनस्वभावत्वात्, अर्थमात्रप्रतिपत्त्या प्रतारके तत्राथात्म्यानवगम इति चेत्,

प्रयोगकुशलेन मनीषिणा प्रयुक्तस्य शब्दस्य कुत्रचित् स्वाभि प्रायावबोधजनकत्वस्वभावस्याकामेनापि स्वीकारादितिभाव । ननु शब्दस्य तथास्वभावस्वीकारेण कस्यचित् प्रतारकस्य भवतु तदी

यार्थमात्रप्रतिपत्ति न तावता तस्य यथायावबोध इत्याशङ्कते-अथमात्रप्रतिपत्त्येत्यादिना-समाधत्ते-नेत्यादिना-प्रतारकत्वस्य राग द्वेषमूलकतया भगवतश्च रागद्वेषराहित्येन न प्रतारकत्वमिति नोक्तदोष । ननु सत्यामात्यन्तिक्यामुदासीनतायां कथं देशनाय प्रवृत्तिरित्याशङ्कते प्रकृष्टौदासीन्यभावेनत्यादि समाधत्ते-नेत्यादिना-

४२-( मूलम् ) प्रकृष्टौदासीन्यभावेन वीतरागस्य देश नानुपपत्तिर्युक्तेति चेत्, न, औदासीन्येनैव प्रवृत्ते , तथाहि-न भगवतस्तिर्यङ्नरामरेषु देशनाया विशेष , यथाबोध प्रवृत्ते , तथा प्रवृत्तिरप्येकान्तौदासीन्यबाधिनीति चेत्,

सत्यामुदासीनतायामौदासीन्येन देशनाप्रवृत्तौ न किञ्चिद्बाधक मितिभाव । उपपादयति तथाहीत्यादिना-यतो हेतोरौदासीन्येनैव भगवतो देशनाया प्रवृत्तिस्तत एव तिर्यङ्नरामरेषु देशनाया कश्चिद् विशेषो न भवति, अन्यथा सर्वेषामेव तेषां कृते भिन्न भिन्नया देशनया भवितव्यम् । ननु कथमेकस्यामेव देशनाय सर्वेषां तेषां श्रवणादौ प्रवृत्तिरित्याशङ्क्य समाधत्ते-यथेत्यादि-भगवतो देशना तु समानैव सर्वेषां तेषां श्रुते प्रवृत्तिस्तु यथाबोध स्वीकरणीयेति भाव । ननु देशनायामौदासीन्येनापि प्रवृत्तिरात्य न्तिक्या उदासीनताया बाधिका स्यादित्याशङ्कते-तथाप्रवृत्तीत्यादि-समाधत्ते-नेति ।

४३-( मूलम् ) न, तस्या अन्यनिमित्तत्वात्, प्रवचन वात्सल्यादिनिमित्तमागुपात्ततीर्थकरनामकर्मनिर्जरणहेतुत्वात्, उक्तश्च " त च कह वेइज्जइ ? अगिलाए धम्मदेसणाईहि "

ऽवस्थानात्मार्थप्रवृत्ते आत्यन्तिकश्रुतकृत्यतादिबाधकस्य नास्ति तथा देशनाप्रवृत्तेरपि तादृशश्रुतकृत्यताबाधकस्य नास्तीत्यनुसंधेयम्। ननु स्थितिप्रवृत्ति प्रवृत्तिरहितस्यापि पुरुषस्य स्वरसत समुत्पद्यते देशनाप्रवृत्तिस्तु न तथेति न स्थितिप्रवृत्तिदृष्टान्तेन देशनाप्रवृत्ते श्रुतकृत्यतायामबाधकत्वमुपपादयितु शक्यमित्याशङ्कते-माऽप्रवृत्त स्यापीत्यादि-सा-स्थितिप्रवृत्ति । स्वरसत-स्वेच्छाविशेषात् । एव-अवधारणार्थकम् । समाधत्ते-तथाविधेत्यादि-

४५-( मूलम् ) तथाविधकर्मयुक्तस्य देशनाप्रवृत्तिरप्येवमस्त्वित्यदोष, अतीर्थकरवीतरागदेशनाप्रवृत्तिरयुक्तेति चेत्, न, अनभ्युपगमात्, नहि सामान्यकेवलिनस्तथा देशनाया प्रवर्तन्ते स्त्यल प्रसङ्गेन ॥

तीर्थकरनामकर्मसहितस्य देशनाप्रवृत्तिरपि तथाविधकर्मसद्भावेन भवतीति न कश्चिद्दोष इति भाव । ननु तीर्थकृतो वीतरागस्य देशनाप्रवृत्तिस्तथाविधश्रुतकृत्यताया अबाधिका भवतु, तीर्थकृद्भिन्नस्य वीतरागस्य देशनाप्रवृत्तिश्रुतकृत्यताया बाधिका भवेदेवेत्याशङ्कते अतीर्थकरेत्यादि । समाधत्ते-अनभ्युपगमादिति । न वयमतीर्थकरस्य केवलिनो देशनाप्रवृत्ति स्वीकुर्मो येन साऽऽपत्ति स्यादस्माकमिति भाव । एतदेव स्फुटयति-नहीत्यादिना-सामान्यकेवलिन -तीर्थकृद्भिन्नस्य केवलित्वसाधारणधर्मवत । तथा-तेन प्रकारेण औदासीन्येनेति यावत् । अथेदानीं प्रागावेदित प्रमाणपञ्चकविरह-प्रयोज्यमभावस्य मानत्व खण्डयितुमुपक्रमते यच्चोक्तमित्यादिना खण्डने हेतुमाह-विकल्पानुपपत्तेरिति ।

४६-(मूलम्) यच्चोक्तं "प्रमाणपञ्चकावृत्तिस्तत्राभावस्य मानता" (श्लो० १३) इति, एतदप्ययुक्तं विकल्पानुपपत्तेः, तथाहि-अभावाभावः किं प्रमाणपञ्चकविनिवृत्तिमात्रमभाव एव ? आहोस्विदात्मा ज्ञानविनिर्मुक्तः २, उताहो उपलब्ध्यन्तरात्मकः ३ इति, न, तावत्तुच्छ एव, तस्य निरुपाख्यत्वेन तदभावपरिच्छेदकत्वानुपपत्तेः,

विकल्पानुपपत्तेरिति तत्राऽयमर्थः, विकल्पप्रकारं तदनुपपत्तिञ्चोपपादयति तथाहीत्यादिना-असौ प्रमाणपञ्चकातिरिक्तप्रमाणकत्वेन बुद्धिविषयीभूतः । प्रमाणपञ्चकविनिवृत्तिमात्रम्- केवलं प्रमाणपञ्चकराहित्यम् । यादिना सर्वत्र प्रमाणत्वेनाभिमतोऽभावः किं प्रमाणपञ्चकराहित्यमात्रमभाव एव ? अथवा ज्ञानविनिर्मुक्ताऽऽत्मस्वरूपः ? आहोस्वित् अन्योपलब्धिरूपः ? इत्येवंविधास्तिस्रो विप्रतिपत्तयो मल्पना सम्भवन्तीति भावः । तत्राभावस्य प्रमाणपञ्चकविनिवृत्तिमात्रतां खण्डयति "न तावत्तुच्छ एवेत्यादिना" "सदाभावादिप्रसङ्गः" इत्यन्तेन सन्दर्भेण प्रमाणत्वेनाभिमतस्याभावस्य तुच्छत्वं न स्वीकरणीयम् यतोऽभावो यदि तुच्छः स्यात्तर्हि तस्य निवक्तुमशक्यत्वेन अनिर्वचनीयस्य गगनकुसुमादेः सौरभादिदायकत्वमिव तुच्छस्य तस्य सर्वज्ञाभावपरिच्छेदकत्वं न स्यादिति प्रमाणपञ्चकविनिवृत्तिमात्रमभावो नाभावस्वरूपतामर्हतीति, तत्र हेतुमाह-"ज्ञानस्य हीत्यादि"—

४७-(मूलम्) ज्ञानस्य हि परिच्छित्तिर्धर्मो नाभावस्य, नचाभावपरिच्छेदकमानजनकत्वमभावस्य, अभावत्वविरोधात्,

भावपरिच्छेदकत्वमभावस्य तदैव भवितुमर्हति यदा परिच्छेदकत्वमभावस्य धर्मः स्यात् तस्य (परिच्छेदकत्वस्य) ज्ञानधर्मत्वादितिभावः । नन्वभावस्य परिच्छेदकत्वाभावेऽपि-अभावपरिच्छेदकज्ञानजनकत्वमस्तु तावतैव सर्वज्ञाभावप्रमापकत्वमव्याहतमेवेत्याशङ्कते-नचाभावेत्यादि-अस्य-अभावस्य अभावपरिच्छेदकज्ञानजनकत्वं नैव स्वीकरणीयमिति भावः । तत्र हेतुमाह-अभावत्वविरोधादिति-यदि तादृशज्ञानजनकत्वं तत्र स्वीक्रियेत तर्हि तत्राभावत्वमेव व्याहन्येत, तादृशज्ञानजनकत्वाभावत्वयोरेकत्रानवस्थानात्मकविरोधादितिभावः । अन्यामापत्तिमाह-तज्जननेत्यादि—

४८—(मूलम्) तज्जननशक्त्यभावे तदनुत्पत्तेरतिप्रसङ्गात्, तदभ्युपगमे भावत्वापत्तिः, किञ्च-अभावाद् भवतीति कारणप्रतिषेधात्तज्ज्ञानस्य निर्हेतुकत्वेन सदाभावादिप्रसङ्गः ।

अयं भावः—कारणनिष्ठकार्योत्पादनसामर्थ्याभावे कार्यानुत्पत्तिर्भवति तथाचाभावेऽभावपरिच्छेदजननसामर्थ्यविरहेऽभावपरिच्छेदानुत्पत्तिरेव ।

किञ्चाभावेऽभावपरिच्छेदजननशक्तिः स्वीक्रियते न वा? यदि नो स्वीक्रियते तर्हि तत्र परिच्छेदानुत्पत्तेरेवेष्टतया तत्परिच्छेदेऽतिप्रसङ्गः । यदि च स्वीक्रियते तदाऽभावस्य भावत्वापत्तिः स्यात् । ननु जायतां भावत्वापत्तिः किमनिष्टमिति प्रतिपक्षिशङ्कायामाह-किञ्चेत्यादिना-अभावाद्भवतीति भवन्मतेऽभावस्यासत्त्वेन कारणप्रतिषेधः फलति, एवञ्चाभावादुत्पद्यमानस्याभावपरिच्छेदात्मकज्ञानस्य फलितेन निर्हेतुकत्वेन कारणानपेक्षणात् सर्वदोत्पत्त्यादि

प्रसङ्ग स्यादितिभावः । एवञ्च सर्वज्ञाभावप्रमाणत्वेनाभ्युपगतस्या भावस्य प्रमाणपञ्चकविनिवृत्तिमात्रता न स्वीकर्तुं शक्येति ।

द्वितीय विकल्पं खण्डयति-अथात्मेत्यादि—

४९-(मूलम्) अथात्मा ज्ञानविनिर्मुक्तः, ततोऽपि तदाभावनिश्चयाभावः, ज्ञानशून्यत्वात्, ज्ञानस्य च निश्चयो धर्म इति, "अथ चैतन्य स्वरूपम्" इति वचनात् तदेव निश्चय इति ।

अभावस्य ज्ञानविनिर्मुक्ताऽऽत्मस्वरूपताया स्वीकृतायामपि ज्ञानविनिर्मुक्तात्मना सर्वज्ञाभावनिश्चयाभाव प्राप्नोति तत्र हेतुमाह-ज्ञानशून्यत्वादिति, ज्ञानविनिर्मुक्तात्मनो ज्ञानरहितत्वादितिभावः । ननु ज्ञानरहितादपि तत कथञ्च तादृशो निश्चय इत्याशङ्का निराकरोति-ज्ञानस्य चेत्यादि । निश्चयस्य ज्ञानवृत्तित्वेन हेतुना ज्ञानरहितादात्मन कथमपि निश्चयो नैव भवितुमर्हतीतिभावः । ननु "चैतन्य पुरुषस्य स्वरूपम्" इत्यागमवचनात् चैतन्यमेव निश्चय आत्मनि सिद्ध इति तत एव सर्वज्ञाभावनिश्चयो जायता मित्याशङ्कते-अथ चैतन्यमित्यादि-समाधत्ते-नेत्यादि—

५०-(मूलम्) न तर्हि ज्ञानविनिर्मुक्तः, तस्यैव ज्ञान त्वादिति ॥ २ ॥ अथोपलम्भयन्तरात्मकः, ततोऽपि तद भावनिश्चयाभाव, तद्विषयसंसर्गेण तद्ग्रहणासिद्धे, तथा न्यत्वा(त्रा)भावस्य निश्चयो, न्यायविद स्वभावविप्रकृष्ट-वस्तुसत्त्वाशङ्काऽनिवृत्ते,

यद्येवं तर्हि ज्ञानविनिर्मुक्तत्वमेवात्मनोऽसिद्धम्, निश्चयस्यैव ज्ञानत्वादितिभावः । एवञ्चाभावस्य सर्वज्ञाभावप्रमाणत्वेनाभ्युपगतस्य ज्ञानविनिर्मुक्तात्मत्वमपि न स्वीकर्तुं शक्यमिति ।

तृतीय विकल्पं खण्डयितुमुपक्रमते-अथवेत्यादि-यद्यभावस्यो पलम्भ्यान्तरस्वरूपत्वं तर्हि तथाविधाऽभावतोऽपि सर्वज्ञाभावनिश्चयो न स्यादितिभावः । तत्र हेतुमाह-तदविषयेत्यादि-सर्वज्ञाभाव निश्चयाविषयेण संसर्गेण सर्वज्ञाभावनिश्चयासिद्धेरित्यशयः । ननु यथाऽन्याभावनिश्चयस्तथैव सर्वज्ञाभावनिश्चयोऽपि स्यादित्याशङ्कते-नचेत्यादि-समाधत्ते-न्यायविद् इत्यादि "सर्वज्ञमाहकप्रमाण भावान्नास्ति सर्वज्ञ" इत्यात्मकन्यायविद् स्वभाववैचित्र्यात् सर्वज्ञसत्त्वाऽऽशङ्का निवृत्तिर्न स्याद्यथा घटाद्यभावनिश्चये सत्यपि घटसत्त्वाऽऽशङ्कानिवृत्तिर्नादतिभावः । ननु तदविषयसंसर्गेण तद्ग्रहणासिद्धिमस्वीकृत्य सर्वज्ञाभावनिश्चयाभाव आपादितः किन्तु तदविषयसंसर्गेण तद्ग्रहणासिद्धिमेव न वयं स्वीकुर्म इति कथं तदापत्तिरित्यारित्याशङ्क्य समाधत्ते-तदविषयेत्यादि--

५१-(मूलम्) तदविषयसंसर्गेण तद्ग्रहणाभ्युपगमे च न तस्यैकान्ततोऽसत्त्वमिति, अन्यस्त्वाह अभावो ह्यभावज्ञानमेव,

यदि तदविषयसंसर्गेण तद्ग्रहणमभ्युपगम्यते तदा तस्य सर्वज्ञस्याऽऽत्यन्तिकमसत्त्वं न सिद्ध्यतीतिभावः ।

अथ सर्वज्ञाभावसाधकमन्यप्रतिपक्षिमतमपाकर्तुमुपक्रमते-"अन्यस्त्वाह" इति, तदीयं मतमुपपादयति-अभावो ह्यभावेत्यादि ।

प्रमेयत्वमात्रसाधकत्वाभिमतस्याभावस्याभावज्ञानरूपत्वं स्वीकरणीयम्, अस्य ज्ञानस्य विषयस्तुच्छम् (अभाव) कुलालादिर्यथा व्यापारमनुभूय घटादौ हेतुस्तथा नायमभावः स्वपरिच्छेदकज्ञानहेतुः स्वीक्रियते किन्तु विषयतामात्रेण इति स्वीकार्यम् ।

अभावेन यद्यभावज्ञानं विषयते तर्हि ज्ञानस्य सविषयतया तद्वदस्य केनाचिद्विषयेणापि भाव्यमित्याशङ्क्य निराकरोति-प्रमेयमित्यादि ।

५२-(मूलम्) प्रमेयं तस्य तुच्छं, न चायं कुलालादिवद् घटादौ व्यापारमनुभूय स्वपरिच्छेदकज्ञानहेतुः, अपि तु विषयतामात्रात्, न चाप्रमेयमप्ययुक्तम्, प्रमेयत्वानुपपत्तेः, न च स्वजन्यज्ञानपरिच्छेद्यत्वेन भावत्वापत्तिः, भावज्ञानपरिच्छेद्यस्य तदभ्युपगमात्,

ननु व्यापारमनुभवन् कुलालस्येव घटहेतुर्न दृश्यते तुच्छस्य विषयस्य स्वपरिच्छेदकं ज्ञानं प्रति व्यापारप्रतिसन्धानात् कथं हेतुत्वमित्याशङ्क्य समाधत्ते-न चायमित्यादिना-विषयतामात्रादित्यन्तेन । ननु भवेदपि विषयतामात्रात् स्वपरिच्छेदकज्ञानं प्रति हेतुत्वं परन्तु मेयं नास्ति तुच्छस्येत्याशङ्कने-न चेत्यादि-समाधत्ते प्रमेयत्वेत्यादि-यदि तुच्छस्य विषयता न स्वीक्रियेत तर्हि तस्य प्रमेयत्वमप्यनुपपन्नं स्याच्च तदिष्टमिति भावः । ननु विषयतास्वीकारे स्वजन्यज्ञानपरिच्छेद्यत्वेन तुच्छस्य भावत्वापत्तिरित्याशङ्क्ते-न च स्वजन्येत्यादिना । भावज्ञानपरिच्छेद्यस्यैव भावत्वं स्वीक्रियते न पुनरभावज्ञानपरिच्छेद्यस्यापीति समाधत्ते-भावज्ञानेत्यादिना ।

ननु अभावज्ञानात्मनाप्यभावाख्यप्रमाणेन सर्वज्ञाभावप्रतीतिर्दुर्लभै
वेत्याशङ्कते-नचानेनेत्यादिना-समाधत्ते-पञ्चास्तिकायेत्यादिना—

५३-( मूलम् ) न चानेनाविकृतोऽभावो न गम्यते
पञ्चास्तिकाय(अभाव)वत् नास्ति सर्वज्ञ इत्यभावप्रतीति(ते)
रिति, एतदप्यसत्, अधिकृतज्ञानस्यापि तत उत्पत्त्यसिद्धेः
सयोगादिप्रतिपेन्यमन्यतरकायापेक्षमनोविज्ञानात्मकत्वात्,
अस्य चाप्रमाणत्वात् परिणीतिन इष्टविषयानुपपत्त्या
तत्परिच्छेदायोगात्,

पञ्चास्तिकायशब्दतो यथाऽधिकृताभावप्रतीतिस्तथा नास्ति
सर्वज्ञ इत्यतोऽप्यधिकृताभावप्रतीति सुलभैवेतिभाव । अन्यस्त्वा
हेत्यादिनोपपादित पूर्वपक्षिमतमपक्षेप्तुमुपक्रमते एतदप्यसदिति
उपपादयति-अधिकृतेत्यादि-अभावज्ञानात्माभावप्रमाणतोऽपि
"नास्ति सर्वज्ञ" इत्यधिकृतस्य ज्ञानस्योत्पत्तिरसिद्धैवेति
उपपादयति-सयोगादीत्यादिना तत्परिच्छेदायोगादित्यन्तेन ।

प्रकारान्तरेण पूर्वपक्षिमतमपक्षिपति इतश्चेत्यादि—

५४-( मूलम् ) इतश्चाप्रामाणत्व, नास्ति देवदत्त
इत्येवमपि प्रवृत्ते, न चेदमक्षव्यापारज, भाववस्त्वाक्ष
व्यापारानुपपत्ते, अस्याभावात्मकत्वात्, अक्षस्य च विषया
न्तरेऽप्यप्रवृत्त, न च वस्तुविशेषणीभूतत्वेनास्य ग्रह
तथाविधस्य तद्विशेषणत्वासिद्धे,

प्रमाणस्यास्य "नास्ति सर्वज्ञ" इत्यधिकृतस्याभावस्य प्रत्या यकत्वे "नास्ति दयदन्त" इत्येव प्रवृत्तौ प्रतिरोधस्य कस्यचिद्-भावात्तथाऽपि प्रवृत्तिर्दुर्वारैवेति भावः । अधिकृतज्ञानस्याक्षव्यापार जन्यत्वं वारयति–नचेदमक्षेत्यादि–वस्तुनि भावात्मनि सति तज्ज्ञा नमक्षव्यापारेण भवति, अभावात्मनि पुनस्तस्मिन् नाक्षव्यापार इति भावः । कारणान्तरमुपन्यस्यति–अरूपत्वादि । विद्यमानेऽपि कचिद्वस्तुनि अक्षाप्रवृत्तिदर्शनादक्षव्यापारजन्यत्वं सर्वथाऽप्यधि कृतज्ञानस्य नास्तीति दर्शयति–अक्षस्य चेत्यादिना । ननु चक्षुःसंयुक्त-विशेषणतात्मना सन्निकर्षेण "घटाभाववद्भूतलम्" इत्यादौ घटा भावस्य यथा प्रतीतिस्तथैव सर्वज्ञाभावस्यापि जायतामित्याशङ्क्य समाधत्ते–नचेत्यादिना । ननु कस्मिंश्चिदपि सम्बन्धे सति सम्ब न्धप्रतियोगिनो विशेषणत्वं भवेदित्याशङ्क्य सम्बन्धाभावव्यवस्थापनेन निराकरोति–सम्बन्धाभावादित्यादिना—

५५ (सूत्रम्) सम्बन्धाभावात् तादात्म्यतदुत्पत्त्यनु पपत्तेः, विशेषणविशेष्यभावस्य च तदप्रत्यक्षतया कल्पना योगात्, वस्तुधर्मस्य च एकान्ततुच्छत्वाभावतः स्वराद्धा-न्तविरोधाभावः,

तादात्म्यतदुत्पत्त्यनुपपत्तेः सम्बन्धाभावादित्यन्वययोजना । उप संहरति–विशेषणविशेष्यभावस्य चेत्यादिना । तदप्रत्यक्षतया–सर्वज्ञाप्रत्यक्षतयेत्यर्थः । घटस्य प्रत्यक्षत्वेन तदभावस्य भूतलेन विशेषणविशेष्यभावः सम्बन्धः स्वीक्रियते प्रकृते तु सर्वज्ञस्यैवा प्रत्यक्षत्वेन तदभावस्य केनचिदपि विशेषणविशेष्यभावस्य दुरुप पादत्वमिति भावः । अथेदानीं सर्वज्ञाभावस्य वस्तुधर्मत्वं स्वी

कृत्यापि स्वमतेन स्वपक्षसिद्धिमप्रतिकृता वस्तुमुपक्रमते-वस्तुधर्मस्य चेत्यादिना-वस्तुधर्मस्यैका ततुच्छत्वाभावे अतुच्छत्वरूपेणापि नदीयते केनचिद्रूपणभाव्यम्, अतुच्छस्वरूपमेव च वस्तु सर्वज्ञपदव्यपदेशभाजनमिति भाव ।

वस्तुधर्मस्यैका ततुच्छत्वाभावे युक्तिं प्रदर्शयति-न हीत्यादिना ।

५६ (मूलम्) न हि पररूपाभाव स्वरूपभावपृथग्भूत एवेत्येकान्ततुच्छत्वाभाव, न चैवमसर्वज्ञे सर्वज्ञाभावावगमो नेष्यते, न चैवमपि ततुच्छत्वैव, तद्भावस्यैवस्वाभावात्, एकान्ततुच्छभावस्य चाऽतुच्छे तदतद्भाव एवाभावादित्यतो नास्ति षष्ठोऽस्तिकाय इति प्रसिद्धोपादान एवाप्रमाणभूत एव विकल्प, न साक्षात्तुच्छगोचरस्तदप्रतिभासनेन विधिनिषेधाविषयत्वात्तस्यति, अपराभावानवगमादेवास्तिकायेषु सत्यानियमादिसिद्धिरिति सूक्ष्मधिया भावनीयम् ।

पररूपेण घटाभावस्य स्वरूपेण घटात् एकान्तत पार्थक्य नास्तीति भाव । स्वमतेन असर्वज्ञेऽवगतस्यापि सर्वज्ञाभावस्यैकान्ततुच्छता वारयति-नचैवमसर्वज्ञ इत्यादिना-ततुच्छतैवेत्यन्तेन। तत्र हेतु दर्शयति-तद्भावेत्यादिना । तत्र पौद्गलमाह-एकान्ततुच्छभावस्येत्यादिना । सर्वज्ञैव मनसिकृत्य नास्तीत्यादि विकल्पस्य प्रसिद्धोपादानत्वमप्रमाणभूतत्वञ्चाकलयति- दित्यतोनास्तीत्यादिना विकल्प इत्यन्तेन । उक्तविकल्पस्य साक्षात्तुच्छगोचरत्व व्युदस्यति-न साक्षात्तुच्छेत्यादिना । पष्ठास्तिकायादिशब्दाना प्रवृत्तिनिमित्तमुपपादयति-अपराभावेत्यादिना-भावनीयमित्यन्तेन ॥

शङ्कां समाधत्ते—नन्वतत्स्वभावत्वे इत्यादि—अयं भावः—कस्यचित् पद्मरागादेः कदाचित् विशुद्धिर्भवति न तु सर्वदेति वस्तुस्थितिः तन्नतत्स्वभावत्वस्वीकारे अमलस्वभावत्वात् मलस्य पद्मरागादर्पि शुद्धयापत्तिः स्यादिति भावः। तत्र हेतुमाह—अमलस्वभावत्वेऽपीति, अमलस्वभावत्वे स्वीकृतेऽपि मलस्वभावतापन्नवद् मलादेरनुपपत्तेरिति भावः। ननु दृष्टान्तदार्ष्टान्तिकयोर्महदन्तरम् पद्मरागादेर्मलस्य भिन्नवस्तुत्वेन पद्मरागोपरञ्जकत्वात् सांसिद्धिकत्वं नास्ति रागादीनां पुनरात्मनः सांसिद्धिकत्वमेवेत्याशङ्कते—न पद्मरागादेरिति।

समाधत्ते—आत्मनोऽपीत्यादि—

५९—(मूलम्) आत्मनोऽपि रागादिषु तुल्यः परिहारः, तथाहि—रागादिवदनीयकर्माणोऽप्यात्मनो भिन्नवस्तुतामनुभवन्तस्तदुपरञ्जका इति तत्त्वनीतिः, निसर्गशुद्धस्य कथं तदुपरञ्जकाः कथं वा न भूयोऽपवर्गावस्थायामिति चेत्, पद्मरागादिष्वपि समानमेतत्,

रागादीनामपि भिन्नवस्तुत्वेनात्मोपरञ्जकत्वात् सांसिद्धिकत्वस्यैव स्वीकरणीयत्वादिति भावः। सांसिद्धिकत्वमेवोपपादयति—तथाहीत्यादि—तत्त्वनीतिरित्यन्तेन ग्रन्थेन। ननु स्वभावशुद्धस्याऽऽत्मनस्ते रागादय उपरञ्जका न भवितुमर्हन्ति, तेषामात्मोपरञ्जकत्वे चापवर्गावस्थायामप्युपरञ्जकत्वमापद्येतेत्याशङ्कते — निसर्गशुद्धस्येत्यादि— समाधत्ते — पद्मरागादिष्वपीत्यादि — निसर्गशुद्धपद्मरागोपरञ्जकत्वमपि मलस्य न स्यात् क्षारमृत्तिकापुटपाकादितो विशुद्धयवस्थायामप्युपरञ्जकत्वञ्च स्यान्न च तथा भवतीति निसर्गशुद्धस्याप्यात्मन उप

रञ्जकत्वमपवर्गावस्थायामनुपरञ्जकत्वमपक्षानेनापि स्वीकरणीयमिति भाव ।

ननु निसर्गशुद्धानां पद्मरागादीनां न मलेनोपरञ्जनं किन्तु मलादिग्रस्तानामेवोत्पत्तिरित्याशङ्कते–न ते निसर्गशुद्धा इत्यादि समाधत्ते–आत्मन्यपीत्यादि—

६०–(मूलम्) न ते निसर्गशुद्धा मलेनोपरज्यन्ते, किन्तु तद्ग्रस्ता एवोपजायन्त इति चेत्, आत्मन्यपि रागाद्यपेक्षया तुल्यमेतत्, अनादित्वात् स नोत्पद्यते इति चेत्, अनादिरेव तद्ग्रस्त इति को दोषः?

आत्मनोऽपि निसर्गशुद्धस्य न रागादिभिरुपरञ्जनं किं तु रागादि मलग्रस्तस्यैवोत्पत्तिरिति समाधानस्य तुल्यत्वादिति भाव । ननु पद्मरागादीनां सादित्वादुत्पत्तिरस्तु आत्मनस्त्वनादित्वादुत्पत्त्यभावा दृष्टान्तदार्ष्टान्तिकयोर्भेद एवान्तरमित्याशङ्कते – अनादित्वादिति – समाधत्ते–अनादिरेवेत्यादि अनादि स उत्पत्तिरहितो भवतु किन्तु स पुनरनादिरेव रागादिग्रस्तोऽपि जायता उत्पत्त्यभावादिति न दृष्टान्त दार्ष्टान्तिकयो कश्चन भेद इति भाव ।

न चात्मनोऽनादित्वेऽपि रागादीनां कथमनादिता, तथा कृतककर्मविशेषत्वादित्याशङ्कते–कृतकेत्यादि–समाधत्ते–नेत्यादि —

६१–(मूलम्) कृतककर्मभेदत्वात्तेषामनादित्वविरोध इति चेत्, न, कृतकत्वेऽप्यनुभूतवर्तमानमात्रातीतकालवत् प्रवाहतोऽनादित्वसिद्धेः, अन्यथा प्राक्कालाभावतोऽबीजत्वेन पश्चादपि तदभावापत्तिः, नह्यसत् सद्भवति, अतिप्रसङ्गात्,

रागादीनां कृतकत्वेऽपि यथाऽनुभूतस्य वर्तमानभावस्यातीत कालस्य प्रवाहतोऽनादित्वं तथैव रागादीनामपि प्रवाहतोऽनादित्वस्य सिद्धिरिति भाव । दृष्टान्तमुपन्यस्यति-अ यथेत्यादि-अन्यथा-रागादीनां प्रवाहतोऽनादित्वास्वीकारे पूर्वकालेऽभावात् अबीजत्वेन पश्चादप्यनीजत्वापत्ति, पूर्वकालेऽभावादसद्बीजत्वं कालान्तरेऽपि सत्वभवितुमर्हति, तथा सति सिकतादितोऽपि तैलादस्त्वसिद्धुर्वारा स्यात् अविशेषात्, तत्र पूर्वमसतोऽपि तैलाद पश्चात् सद्भाव स्वीकारादिति भाव । ननु वर्तमानस्याप्यननुभूतस्यातीतता कृतकत्वस्य च वर्तमानकल्पता स्वीक्रियते इति कथमात्मनोऽनादित्व सिद्धिरित्याशङ्क्य समाधत्ते नचाननुभूतेत्यादिना कृतकत्वमित्यन्तेन ।

६२-नचाननुभूतवर्तमानस्यातीतता, वर्तमानकल्प च कृतकत्वमिति ॥

आह-कुतः पुनरमीषां प्रक्षय ? इति, उच्यते, प्रतिपक्षभावनात, साचानेकान्तभावना, तत्प्रतिपक्षादुपेक्षा-सम्भवसामर्थ्यदर्शनात्,

अथ पद्मरागादिमलाविदृष्टा तेन स्वीक्रियतामात्मनि रागादि-प्रक्षय परं तत्र क्षारमृत्पुटपाकादिरिव नात्र रागादिप्रक्षयकारक कश्चन समुपलभ्यते तथा च कथमात्मनि रागादिप्रक्षय इत्याशङ्कते-आह-कुत पुनरित्यादि समाधत्ते-उच्यते इत्यादि-यथा क्षार मृत्पुटपाकादित पद्मरागकार्तस्वरमलस्य प्रक्षयस्तथा प्रतिपक्षभाव नातो रागादीनां प्रक्षय इति भाव । ननु कीदृशी सा भवति भावना यया रागादिप्रक्षय इत्याशङ्क्य समाधत्ते-साचानेकान्तेत्यादि

अनेकान्तभावनात कथं रागादिप्रक्षय इति शङ्का निराकरोति तत्प्रतीत्यादि-अयमाशय -अनेकान्तवादिभिरस्माभिर्न कस्मिंश्चिदपि वस्तुनि रागोत्पादकत्व द्वेषोत्पादकत्व वा सुखजनकत्व दु खजनकत्व वा किन्तु प्रत्येक वस्तुनि रागोत्पादकत्व द्वेषोत्पादकत्वमपि सुखजनकत्वमिव दु खजनकत्वमपि स्वीक्रियते, तथा यमालम्ब्य राग आत्मनि समुत्पद्यते तमेवावलम्ब्य तस्मिन् द्वेषोऽपि समुदियात् इति रागजनकत्वभावनाया द्वेषजनकत्वभावना प्रतिपक्षभूता समजनि, तथा च रागजनकत्वभावना-प्रतिपक्षभूताद्द्वेषभावनातो रागाद्युपेक्षातो रागादिप्रक्षय स्वत सम्भवतीति मन्तव्यम्, इदमेवोपपादयति-इहेत्यादि-" व्यवहारदर्शनात् " इत्यन्तेन ग्रन्थसन्दर्भेण ।

६३-( मूलम् ) इह " यतो यद्भवति तत्प्रतिपक्षान्न तद्भवितुमर्हति, " इति न्याय,

गुणदोषैकान्तग्रहाच्च रागद्वेषौ, अतस्तत्प्रतिपक्षभूतादनेकान्तत एवोपेभासभवो नान्यथा, तथाहि-उभयात्मकैकत्वोपग्रहादुपेक्षैव दृश्यते स्त्रीशरीरादिषु तद्विदाम्,

तस्या गुणा दोषाश्च, तत किमनयति व्यवहारदर्शनात्,

यत -यस्माद्वस्तुनो यद्वस्तु भवत्युत्पद्यते तत्प्रतिपक्षात्-तत्प्रतिपक्षभूतात्पदार्थात्, तत्-बुद्धिविषयीभूत वस्तु न-नहि, भवितुम्-उत्पत्तुम् अर्हति-योग्यतामाधत्ते, इति न्यायार्थ, कस्मिंश्चिद्वस्तुनि गुणस्यैव दोषस्यैव वा ज्ञानाद्रागो द्वेषो वा जायते इति गुणैकान्तग्रहाद्राग, दोषैकान्तग्रहाद्द्वेष, अत -अस्माद्धेतो, तत्प्रतिपक्षभूतात्

एकान्तमहनिपक्षरूपात्, अनेका तत -अनेकान्तमहात् इद गुण
दोषवच्चेत्येवमनेकान्तज्ञानादिति यावत्, एव-अवधारणार्थकम
व्यवच्छेदपर चाऽव्ययम्, उपेक्षाया -इदमसेव्यमगम्यमवरणी
मध्यानीयमित्यादिबुद्धिविषयताया सम्भवो-योग्यता, अन्यथ
अनेकान्तव्यतिरिक्तात्, न-नहि उपेक्षासम्भव इति शेष ।
युक्तिमुपपादयति—तथाहीत्यादिना-उभयात्मकैकत्वोपमहात्-उभ
त्मकमेकमिदमित्याकारकज्ञानादित्यर्थ । तद्विदाम्-प्रत्येक व
न्युभयात्मकत्व जानता सहृदयानाम् । स्त्रीशरीरादिषु उपे
असेवनीयमित्यादिबुद्धिविषयतैव दृश्यते-अवलोक्यते । तस्या
बुद्धिविषयीभूताया स्त्रियाम् । गुणा -वात्सल्य-भक्तिभाव-व्रत
वासशक्त्यादय । च-पुन । दोषा -मात्सर्याविद्यत्वादी
दूषणानि सन्तीति कृतयाऽनया किमिति व्यावहारिकाणा व्यवह
दर्शनादिति शब्दार्थ । नन्वनेकान्तत्व, ज्ञानतामपि न मै
भवत्युपेक्षा किन्तु सवरशालिनामेव जीवानामिति दिदर्शयिषयाऽ
सा चोपेक्षेत्यादि ।

६४-(मूलम्) सा चोपेक्षा सवरवता सत्त्वान
निमित्ताभावेन अभावादागन्तुकमलस्य तच्चापेक्षा प
णामादिहेतुत , प्रक्षयात् (च)प्राक्तनस्य ।

"सा चोपेक्षा सवरवता सत्त्वानाम्, तत्र निमित्ताभा
आगन्तुकमलस्याभावात् उपेक्षापरिणामादिहेतुत प्राक्तनस्य प्रक्षयात
त्येवमन्वय कल्पनीय । तत्र-सवरवत्त्वञ्च । उपेक्षापरिणामा
हेतुत -उपेक्षापरिपाकादिकारणत । प्राक्तनस्य पूर्वकालजातस्य
प्रक्षयात्-विनाशात् । नन्वेतावता सवरवता सत्त्वानामुपे

भवतीत्युक्तम् सा पुन कथ कीदृशीतिजिज्ञासां निराकरोति-समासादयतामित्यादि—

६५-( मूलम् ) समासादयता ज्ञानवृद्धिं सूक्ष्मेक्षिकयापि वस्तुनि पश्यता तदतदात्मकत्वमभ्यासातिशयेन प्रकृष्टौदासीन्यरूपा जायते इति प्रशाम, तदेव परमार्थतो वीतरागत्व, उक्तश्च—

ज्ञानवृद्धिम्-सम्यग्ज्ञानातिशयम् । समासादयताम्-लभमानानाम्, सूक्ष्मेक्षिकया-सूक्ष्मदृष्ट्या, अपि-खलु । अभ्यासातिशयेन-अतिशयाभ्यासबलेन । वस्तुनि-पदार्थमार्थे, तदतदात्मकत्वम्—सदसदात्मकत्वम् समीचीनासमीचीनात्मकत्वमिति यावत्, गुणदोषवत्त्वमिति हृदयम् । पश्यताम्-अवलोकयताम्, जनानामिति यावत् । प्रकृष्टौदासीन्यरूपा-प्रकृष्ट प्रकर्षयुक्त यत् औदासीन्यम्-उदासीनता तद्रूपोपेक्षा जायते-समुत्पद्यते इति ताद्दृगुपेक्षाधिगमार्थं करणीयो महान् प्रयत्न सर्वथा भव्यात्मभि । ननु जायतामेतादृगुपेक्षा, किं तावतस्येत्यनुमन्यायाह-तदेवेत्यादि—तदेव-बुद्धिविषयीभूत प्रकृष्टमौदासीन्य खलु परमार्थत -वस्तुगत्या वीतरागत्वम्-रागरहितत्वम् सर्वज्ञत्वमितियावत् । उक्तार्थप्रमापकत्वेनाभियुक्तोक्तिमुपन्यस्यति-उक्तञ्चेत्यनेन—

तदेवाह—

औदासीन्य तु सर्वत्र, त्यागोपादानहानित ।
वासीचन्दनकल्पाना वैराग्य नाम कथ्यते ॥ इति

(अन्वय) वासीचन्दनकल्पानाम्, सर्वत्र, त्यागोपादानहानित, औदासीन्यम्, तु, नाम, वैराग्यम्, कथ्यते ।

वृत्ति –वासीचन्दनकल्पानाम्–तक्षणीच दनसदृशानाम्, तक्षणीमपि प्रति सौरभमापादयता चन्दनानामिव अङ्गच्छेदकमपकारिणमपि मधुरोपदेशेन प्रमोदमनुभावयतामितियावत्, योगिनामिति शेष । सर्वत्र–सर्वस्मिन् वस्तुनि । त्यागोपादानहानित –दानग्रहणराहित्येन । औदासीन्यम्–माध्यस्थ्यरीतोपेक्षा । तु–पुन । नाम–कोमलामन्त्रणे । वैराग्यम्–रागराहित्यम् वीतरागत्वमितियावत् । कथ्यते–निगद्यते ॥

एतद्विषये पुनरिद् विस्तरेण कथन नावश्यकमित्यावेदयति– "प्रपञ्चितमेतद्भावनासिद्धाविति नेह प्रयास " इत्यादिना । अथेदानीं " किञ्च जात्यादियुक्तत्वाद्, वक्ताऽसौ गीयते परै " इत्यादिना सदर्भेण पूर्वपक्षिणा प्रसञ्जितमसर्वज्ञत्व सर्वज्ञस्य तमुपदर्शितप्रमाणपरीक्षणव्याजेन खण्डयितुमुपक्रमते–यच्चोक्तमित्यादिना श्लोककदम्बकेन–

यच्चोक्त किञ्च जात्यादि- युक्तत्वादेवमादिना ।
असर्वज्ञत्वससिद्ध्यै, प्रमाण तत् परीक्ष्यते ॥ २२ ॥
असाविति न सर्वज्ञो, वक्तृत्वादेवदत्तवत् ॥

(अन्वय ) च, किञ्च जात्यादियुक्तत्वादेवमादिना, असर्वज्ञत्वससिद्ध्यै, यत्, उक्तम्, "असौ न सर्वज्ञ वक्तृत्वादेवदत्तवत्" इति, तत्, प्रमाणम् परीक्ष्यते ॥

वृत्ति —च-पुन । किञ्च ज्ञात्वाऽन्ययुक्तत्वादेवमादिना-"किञ्च ज्ञात्वादियुक्तत्वाद् वक्ताऽसौ गीयते परै । तत कथं नु सर्वज्ञ " इत्येवमादिना सन्दर्भेण । असर्वज्ञत्वससिद्धयै-सर्वज्ञ सम्यग्यसर्वज्ञत्व ससाधयितुम् ।

यत्-बुद्धिविषयीभूतमनुमानात्मक प्रमाणम् । उत्तम-समुद्भा वितम । असौ न सर्वज्ञो वक्तृत्वादेरस्मदादिवत् इति-इत्याकारकमनु मानात्मकम् । तत्-पूर्वपक्षिसमुद्भावितम्-प्रमाणम्-मानम् प्रमिति साधनमितियावत् । परीक्ष्यते-परीक्षाविषयीक्रियते ॥

तत्र किञ्चिज्ज्ञ इष्टश्चेत्, न ज्ञात तेन किं मतम् ॥२३॥
यदि यागादिविषयो, मिथ्यार्थत्वेन निश्चित । ।
प्रोक्ता हिंसादय सर्वे, यतो दुर्गतिहेतव ॥२४॥

( अन्वय ) तत्र, किञ्चिज्ज्ञ , इष्ट , चेत्, यदि, यागादि विषय , मिथ्यार्थत्वेन, निश्चित , यत , सर्वे, हिंसादय , दुर्गतिहेतव , प्रोक्ता , ( तर्हि ) तेन मतम्, किम, न, ज्ञातम् ? ।

वृत्ति —तत्र-त्वदीयानुमाने । पक्षतयेतिशेष । किञ्चिज्ज्ञ — किञ्चिद्विषयकज्ञानवान् । इष्ट -अभिमत । चेत्-यदि । यदि पूर्वपक्षिणाऽसर्वज्ञत्वसाधकानुमाने पक्षतया किञ्चिज्ज्ञो गृह्यते चेदितिभाव । यदि-चेत् । यागादिविषय -यज्ञादिकार्याणि । मिथ्यार्थत्वेन निश्चिता -अयथार्थज्ञानविषयीकृता , असत्प्रयो जनत्वेन ज्ञाता इतियावत् । ननु यागादिविषयो मिथ्यार्थत्वेन निश्चिता इत्येव कथ निश्चीयते इति चेत्तत्राह-यत इत्यादिना यत -यस्माद्धेतो । सर्वे-निखिला । हिंसादय -हि

यज्ञादिविषय इति यावत् । दुर्गतिहेतव –दु स्थितिकारणानि । प्रोक्ता –निगदिता , सर्वज्ञैरिति शेष । इत्यत्र–किञ्चिज्ज्ञो यागादि धर्मिकमिथ्यार्थत्वनिश्चयवान् दुर्गतिहेतुतया हिंसादिप्रतिपादकत्वात् इत्यनुमानेन यदि मिथ्यार्थत्वेन यागादिविषयक ज्ञान किञ्चिज्ज्ञे सम्पन्न तदा "एको भावस्तत्त्वतो येन" इत्यादिरीत्या सर्वभावा वेदकत्वमकामेनापि स्वीकरणीयमिति पर्यवसितम्, तदाह–तेने त्यादिना–( नहि ) तेन–तादृशेन किञ्चिज्ज्ञेन । मतम्–अभीष्टम् । किं न ज्ञातम् अपि तु सर्वमेव ज्ञातमिति सर्वज्ञत्व तस्मिन् समायातमेवेति ॥ २४ ॥

नञ्मतखण्डने प्रकारान्तरमाह—

अन्यत्व च विरोधो वा, नञर्थश्चेद्विकल्प्यते ।
यमपेक्ष्य विरुद्धोऽसा–वन्यो वा स हि सर्ववित् ॥२५॥

( अन्वय ) च, नञर्थ, अन्यत्वम्, वा, विरोध, इति चेत्, विकल्प्यते, ( तदा ) असौ, यम्, अपेक्ष्य, विरुद्ध, वा, अन्य, हि, स, सर्ववित् ।

वृत्ति —च–पुन । ( "असौ न सर्वज्ञ" इत्यत्र ) नञर्थ – नञ्शब्दार्थ । अन्यत्वम्–भेद । वा–अथवा । विरोध –सहान वस्थानादिलक्षण । ( इति–इत्येवप्रकारेण ) चेत्–यदि । विकल्प्यते– विमति समुपस्थाप्यते । ( तदा ) असौ–अनुमाने पक्षतयाऽभिमत पदार्थ । यम्–बुद्धिविषयीभूत सर्वज्ञम् । अपेक्ष्य–लक्ष्यीकृत्य । य प्रतीत्यर्थ । विरुद्ध –सहानवस्थानादिलक्षणविरोधाश्रय । वा–अथवा । अन्य भिलक्षण, भिन्न इति यावत् । हि–निश्चयेन । स –विरोधप्रतियोगी । सर्ववित्–सर्वज्ञ । स्यादिति शेष ।

अय भाव अद पदार्थतया विवक्षिते पक्षे सर्वज्ञविरुद्धत्व मयज्ञ भिन्नत्व वा भवता साध्यते तदुभयसिद्धि प्रतियोगिभूतसर्वज्ञा त्मकपदार्थसिद्धिमापक्षेत, नहि केनचित् कुत्रापि गगनकुसुम-कूर्मक्षीरादिविरुद्धत्व तदन्यत्व वा साधयितु शक्यते प्रतियोगिनो ऽप्रसिद्धत्वात्, एवञ्च नहि तादृशानुमानेन भवतामभिलषित फलतीति ॥ २५ ॥

नन्वद पदार्थतयाऽभिमते विपरीतज्ञे अविपरीतज्ञभेदो विरोधो वा साध्यते एवञ्चाविपरीतज्ञमपक्ष्य भेदस्य विरोधस्य सिद्धावपि न सर्वज्ञ सिद्धयति, नाय विपरीताविपरीतोभयज्ञत्वादित्याशङ्का ममाधत्ते-विपरीतज्ञ इत्यादिना—

विपरीतज्ञ इष्टश्चे-मन्वनेकान्तदर्शनम् ।
प्रमाणसङ्गत तेन, नैतदप्युपपद्यते ॥ २६ ॥

( अन्वय ) चेत्, विपरीतज्ञ, इष्ट, ननु, अनेकान्तदर्शनम्, प्रमाणसङ्गतम्, तेन, एतदपि, न, उपपद्यते ।

वृत्ति —चेत्-यदि । विपरीतज्ञ -विपरीत जानातीति तथा, अद पदार्थतया पक्षत्वेन, इष्ट -अभिमत । भवतामितिशेष । ननु-निश्चयेन । अनेकान्तदर्शनम् स्याद्वाददर्शनम् । प्रमाणसङ्गतम्-प्रामाणिकम् । भवदिति शेष । भवतामप्येकस्मिन् घटादौ विपरीताविपरीतत्वोभयाभ्युपगमात् एकस्मिन्ननेकधर्मसमावेशना त्मकमनेकान्तदर्शनमभ्युपेयमित्यनेकान्तदर्शन भवतामनिष्टमपि सम्पन्न भवत्, एवञ्चासाकीन पक्ष सिद्धयतीति भाव । तेन-हेतुना । एतदपि-इदमप्यनुमानम् । न-नहि ।

त्वपपन्न भवतीति ॥ एवञ्चात्र "विपरीतज्ञपक्षकमनुमानमिदं भय वनिष्टसाधनम् अनेकान्तज्ञानसाधकत्वादित्यनुमानं फलतीति ॥२६॥

कुत्सितज्ञस्य पक्षतयाऽभिमतत्वेऽप्याह—

इत्येवं कुत्सितज्ञश्चेत्, कुत्सिता नरकादयः ।
तज्ज्ञानसाधने तस्य, भवेदिष्टप्रसाधनम् ॥ २७ ॥

(अन्वय) इत्येवम्, चेत्, कुत्सितज्ञ, कुत्सिता, नरकादय, तस्य, तज्ज्ञानसाधने, इष्टप्रसाधनम्, भवेत् ॥

वृत्ति —इत्येवम्-इत्यनेन प्रकारेण। चेत्-यदि। कुत्सितज्ञ - कुत्सितं निन्दितं जानातीति तथा, पक्षतयाऽभिमतो भवता मितिशेष। (तर्हि) कुत्सिता -निन्दिता। नरकादय -नरकप्रमुखा। प्राय सर्वे एव लौकिका इति यावत्। एवञ्च समस्त नरकादिविषयकज्ञानवत्त्वमवश्यमपेक्षणीयं स्यात्। तस्य-कुत्सितज्ञस्य। तज्ज्ञानसाधने-अखिलकुत्सितपदार्थविषयकज्ञानसाधने। इष्टप्रसाधनम्-इष्टस्य-अभिमतस्य अखिलकुत्सितपदार्थविषयकज्ञानवत सर्वज्ञस्येति यावत् प्रसाधनम्-प्रकर्षेण साधनम्, इष्टप्रसाधनम्, तस्मिन् तथा। भवेत्-स्यात्। एवञ्च कुत्सितज्ञपक्षकमनुमानमिदं मत्सदभिमतसाधकम्, फलत सर्वज्ञसाधकत्वादिति। ननु न मया विपरीतज्ञ कुत्सितज्ञो वा पक्ष क्रियते किन्तु य किञ्चित जानीते एवंविधोऽकिञ्चिज्ज्ञस्तत्र सर्वज्ञभेदसाधने न तवेष्टसिद्धि रित्याशङ्कय समाधत्ते-अथेत्यादिना—

अथ किञ्चिन्न जानीते, तादृग्वक्ता कथं भवेत्? ।
एवं तावत्प्रतिज्ञार्थ, सर्वथा नोपपद्यते ॥ २८ ॥

( अन्वय ) अथ, किञ्चित्, न, जानीते, तादृक्, वक्ता, कथम्, भवेत्, एवम्, तावत्, प्रतिज्ञार्थे, सर्वथा, न, उपपद्यते ।

वृत्ति —अथ-यद्यर्थेऽव्ययम् । ( य ) किञ्चित्-किमपि । न-नहि । जानीते-अवबुध्यते । ( असौ ) मया पक्षत्वेन स्वीक्रियते इति शेष । तर्हीतियन्दर्थलभ्यम् । तादृक्-तादृश, किञ्चिदपि-विषयकज्ञानाभाववान् जन इति यावत् । वक्ता-उपदेष्टा, निगदितेति यावत् । कथम्-येन प्रकारेण । भवेत्-जायेत । यदि स वक्ता न भवितु शक्नोति, तर्हि तादृशे पक्षे वक्तृत्वात्मकहेतोर भावात् हेत्वभाववत्पक्षात्मकस्वरूपासिद्धिदोषदूषितत्वेन हेत्वाभासतया तेन हेतुनाऽनुमित्यनुत्पत्ते, तदाह-एवमित्यादि-एवम्-अनेन प्रकारेण । तावत्-निश्चयेन । प्रतिज्ञातार्थे -प्रतिज्ञात -प्रतिज्ञाविषयी भूतश्चासावर्थ प्रयोजनम्, तथा, सर्वज्ञाभावसाधनात्मकप्रयोजन मिति यावत् । सर्वथा-सर्वेणापि प्रकारेण । न-नहि । उपपद्यते-युक्तियुक्त भवति । अयभाव "असौ न सर्वज्ञ वक्तृत्वादेवदत्तवत्" इत्यनुमाने पक्षतयाऽभिमते किञ्चिदपिविषयकज्ञानाभाववति जने वक्तृत्वात्मकहेतोरभावात् "ह्रदो वह्निमान् धूमात्" इत्यादौ [1]स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमाभाववद्ह्रदा त्मकदोषविशिष्टत्वेन धूमस्य हेत्वाभासतया यथा ह्रदपक्षकवह्न्यनुमापकत्व नास्ति तथा वक्तृत्वस्य तादृशे पक्षेऽसत्त्वेन वक्तृत्वा

---

१ स्वपदेन धूमाभाववद्ह्रदात्मकदोषस्य ग्रहणम्, तज्ज्ञान च धूमाभाववान् ह्रदो धूमश्चेति समूहालम्बनात्मक ग्राह्यम्, तज्ज्ञानविषय प्रकृतो हेतुर्धूम, हेतुतावच्छेदक धूमत्वम्, तद्वत्त्वस्य धूमे सत्त्वात्तादृशसम्बन्धेन तादृशदोषवत्त्व हेतावाकलनीयम् ।

भाववत्तादृशपक्षात्मकदोषस्य पूर्वोक्तसम्बन्धेन वक्तृत्वात्मकहेतौ सत्त्वेन वक्तृत्वस्य हेतोर्दुष्टतया[१] तस्य न तादृशपक्षकसर्वज्ञभेदानुमापकत्व मिति न भवता प्रतिज्ञातार्थसिद्धिरिति ॥ २८ ॥

ननु सर्वज्ञात्मकपक्षे परप्रकल्पितस्य सर्वज्ञस्य व्यवच्छेद साध्यते, एवञ्च न भवन्मतसिद्ध सर्वज्ञ सम्पद्यते इति पूर्व पक्षिणा युक्ति पूर्वपक्षोत्तरपक्षाभ्या खण्डयति—

परप्रकल्पितस्यैव, व्यवच्छेदोऽथ साध्यते ।
तदयुक्त यत शब्दो, न ते भाव व्यपोहते ॥२९॥

( अन्वय ) अथ, परप्रकल्पितस्य, एव, व्यवच्छेद, साध्यते, तत्, अयुक्तम्, यत, शब्द, ते, भावम, न, व्यपोहते ।

वृत्ति —अथ-यदि । अव्ययानामनेकार्थत्वात् । परप्रकल्पि तस्य-परेण-अन्येन भवताऽऽर्हतेनेति यावत्, प्रकल्पित साधित परप्रकल्पितस्तस्य तथा भव मतसिद्धसर्वज्ञस्येति यावत । एव-खलु। व्यवच्छेदो-भेद । साध्यते सिद्धीक्रियते, साधनानुकूलकृति विषयीक्रियते इति यावत् । तत्-बुद्धिविषयीभूतपरप्रकल्पितभेद साधनम् । भवतामिति शेष । अयुक्तम्-अनुचितम्, युक्तिविरहित मितियावत् । अयुक्ततामेव प्रदर्शयति-यत इत्यादिना । यत -यस्मात् कारणात् । शब्द -" असौ न सर्वज्ञो वक्तृत्वादेवदत्तवत् "

१ इद वक्तृत्वाभाववत्तादृशपक्षात्मकदोषस्तथ्वात वक्तृत्वाभावा नकिञ्चिज्ज्ञो वक्तृत्वश्चेतिसमूहालम्बनात्मकम्, तद्विषय प्रकृतो हेतुवक्तृत्वम् हेतुतावच्छेदक वक्तृत्वत्वम् तद्वत्त्वस्यत्वरूपत्वे हेतौ सत्त्वेन तस्य हेतोर्दुष्टत्वमवसेयम् ।

इत्याकारकवाक्यसन्दर्भविशेष । ते–तव । भावम् सर्वज्ञभावम् भवन्मतसिद्धसर्वज्ञात्मक पदार्थमिति यावत्, न–नहि । व्यपोहते–दूरीकरोति । भवदनुमानव्यवहारघटकसर्वज्ञपदेन भवन्मतसिद्ध सर्वज्ञस्याप्रतिपादने मानाभावात् सर्वज्ञपदस्य सर्वज्ञत्वावच्छिन्ने शक्तत्वात् अन्यथा अनीलघटानयनतात्पर्येणापि "घटमानय" इत्येव व्यवहारापत्तेरिति भाव ॥ २९ ॥

एव वक्तृत्वहेतुना न तवेष्टसिद्धिरित्याह—

सर्वज्ञत्वेन वक्तृत्व, यतश्च न विरुध्यते ।
अतस्तेन स(न)सन्न्यायात्, तदभावोऽत्र साध्यते ॥३०॥

( अन्वय ) च, यत, सर्वज्ञत्वेन, वक्तृत्वम्, न, विरुध्यते, समन्यायात्, अत, ते, तदभाव, अत्र, न, गम्यते ।

वृत्ति —च–पुन । यत –यस्मात् कारणात् । सर्वज्ञत्वेन–सकलविषयकज्ञानवत्त्वेन । वक्तृत्वम्–प्रवक्तृत्वम् । न–नहि । विरुध्यते–विरुद्ध भवति । समन्यायात्–सन्न्यायसवलितात् । अत –अस्मात्कारणात् । त–तव । तदभाव –सर्वज्ञत्वाभाव । अत्र–पक्षे । न–नहि । गम्यत–प्रतीयत ॥ "अतस्तेन न सन्न्यायात्" तदभावोऽत्र गम्यते "इत्येव द्वितीयार्द्धस्वीकारे तु अत, तेन, सन्न्यायात्, अत्र, तदभावो न गम्यते" इत्येवमन्वय विधाय अत –अस्माद्धेतो । तेन–वक्तृत्वेन हेतुना । सन्न्यायात्–समीचीनन्यायप्रयोज्य । तदभाव –सर्वज्ञत्वाभाव । अत्र–पक्षे । न–नहि । गम्यते–प्रत्येतु शक्यते" इत्येव व्याख्येयम् ॥ ३० ॥

पूर्वपक्षी,

असर्वज्ञाविनाभूत, दृष्ट सर्वत्र तन्मत ।
ततोऽसर्वज्ञसंसिद्धे-र्ननु कस्मान्न गम्यते ? ॥ ३१ ॥

( अन्वय ) यत, तत, सर्वत्र, असर्वज्ञाविनाभूतम दृष्टम, तत, असर्वज्ञससिद्धे, ननु ( तदभाव ) कस्मात, न, गम्यते ? ॥

वृत्ति — यत –यस्मात्कारणात् । तत्–बुद्धिविषयीभूत वक्तृत्वम । सर्वत्र–सर्वस्मिन् स्थाने । असर्वज्ञाविनाभूतम्–असर्वज्ञसत्तानियत सत्ताकम् । दृष्टम्–ज्ञातम । तत –तस्मात्कारणात् । असर्वज्ञससिद्धे – वह्न्यविनाभूतेन धूमेन वह्नेरिव असर्वज्ञाविभूतेन वक्तृत्वेन असर्वज्ञस्य ससिद्धे । ननु निश्चयेन । पक्षे तदभाव –पक्षतया ऽभिमते सर्वज्ञत्वाभाव ) कस्मात् कस्मात् कारणात् । न–नहि । गम्यते–प्रतीयते, अनुमीयते इति यावत । अय भाव यदेना विनाभूत तेन, तदनुमित भवति, यथा धूमो वह्न्यविनाभूत, तेन धूमेन वह्निरनुमितो भवति एवञ्च प्रकृतेऽपि असर्वज्ञाविना भूतेन वक्तृत्वेनासर्वज्ञस्य सिद्धिर्निर्विघ्नत्येवेति ॥ ३१ ॥

सिद्धान्ती समाधत्ते-श्लोकद्वयेन—

सर्वत्र दर्शनासिद्धे-रतीतादेरदर्शनात् ।
न तुल्यमग्निधूमादौ, यतोऽग्नेर्धूमभावतः ॥ ३२ ॥
एव यद्यन्यभावोऽसौ, सकृदप्यन्यथा तत ।
न धूम' स्यान्नचेदेव वक्तृत्व तन्निरन्धनम् ॥ ३३ ॥

( अन्वय ) अतीताद, अदर्शनात्, सर्वत्र, दर्शनासिद्धे, अग्निधूमादौ, न, तुल्यम्, यत, अग्ने, धूमभावत । एवम्,

यदि, अन्यभाव, असौ, सहन, अपि, अन्यथा, (तदा) तत्र धूम, न, स्यात्, इत्थं, च, एवम् वक्तृत्वम्, तन्निबन्धनम् न ॥

वृत्ति —असाधादे-भूतप्रमुखस्य, भूतस्य आगतस्य चेति यावत्। अदर्शनात्-अनवलोकनात्। सर्वत्र-सकलेऽपि स्थाने। दर्शनस्य-असर्वज्ञाविनाभूतवक्तृत्वकर्मकावलोकनस्य असिद्धि सिद्धसमाना दर्शनासिद्धिस्तस्मात्तथा। अग्निधूमादौ वह्निधूमादिस्थले। न-नहि। तुल्यम्-समानम्। वह्न्यविनाभूतत्वस्यापि धूमे सर्वत्रादर्शने न समानमित्यर्थ। यत-यस्माद्धेतो। अग्न-वह्नि सकाशात्। धूमभावत-धूमस्य भाव उत्पत्तिर्धूमभाव स्तस्मात्तथा। एवञ्च धूमस्य वह्नेः सकाशादुत्पत्त्या वह्न्यविनाभूतत्वं धूमे निर्विवाद सिद्धमिति। एतदेव स्फोटयति यदभिप्रायादिना श्लोकेन-एवम्-अनेन प्रकारेण। यदि-चेत्। अन्यभाव-अन्यपदार्थ। असौ-बुद्धिविषयीभूतो धूम। सहन्-पकाराम। अपि-खलु। अन्यथा-वह्न्यनविनाभूत, वह्निन विनाभूत इतियावत् (स्यात्, तदा) तत्र-वह्नेः। धूम-धूम पदार्थ। न नहि। स्यात् भवेत्-नायेतेत्यर्थ। एवञ्च धूमे यदि वह्न्यविनाभूतत्व न स्वीक्रियेत तदा वह्ने सकाशात्तदुत्पत्तिरेव न समुदियात् अतो धूमे वह्न्यविनाभूतत्व स्वीकरणीयमकामेनापि पूर्वपक्षिणाऽपि, प्रकृते तु तन्नियमो नास्तीत्याह-नचेदं रमित्यादिना-इदं-असर्वज्ञवक्तृत्वादौ। च-पुन। एवम्-अनेनप्रकारेण। वक्तृत्वम्-हेतुतयोपन्यस्तम्। तन्निबन्धनम्-सोऽसर्वज्ञो निबन्धन कारणं यस्य तत्तथा, असर्वज्ञजनितमितियावत्। न-नहि। एवञ्च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यवसेयम् ॥ ३२ ॥ ३३ ॥

कथं न तुल्यभावेऽपि, ननु सर्वस्य सर्वथा ।
अनन्तभूतदोषाद-रात्मनस्तु तदुद्भवात् ॥ ३४ ॥

( अन्वय ) तु, अनन्तभूतदोषाद्, आत्मन, तदुद्भवात्, ननु तुल्यभावे, अपि, सर्वस्य, सर्वथा, कथम्, न ।

वृत्ति — तु-पुन । अनन्तभूतदोषाद्, अनन्ता अपरिमिताश्च ते भूता पृथिव्यादयोऽनन्तभूतास्तेषां दोषादिर्यस्य सोऽनन्तभूतदोषादिस्तस्मात्तथा अनन्तभूतत्वेपादिविशिष्टादित्यर्थ । आत्मन — जीवात्मन, असमक्षभूतादात्मन इति यावत्। तदुद्भवात्-वक्तृत्वोत्पत्ते ।

ननु-निश्चयेन । तुल्यभावे-गुणगुणिनोरभेदात् समानभावे, अभिन्नपदार्थत्वे इति यावत्। अपि-खलु। सर्वस्य-निखिलस्य। सर्वथा-सर्वप्रकारेण। कथम्-केन प्रकारेण। न-नहि। असर्वज्ञाविनाभूतत्वमिति शेष । सदोषादेवात्मनो वक्तृत्वोत्पत्तिस्वीकारात् असर्वज्ञादेव वक्तृत्वोत्पत्तिसिद्धेर्धूमवद् व्यविनाभूतत्वमिव वक्तृत्वेऽप्य सर्वज्ञाविनाभूतत्वसिद्धौ बाधकाभावात् तेन हेतुना सर्वज्ञभेदानुमितिसिद्धिरिति भाव ॥३४॥ समाधत्ते—

अग्निदोषाद्यनासत्य, धूमोऽप्यत्राग्निहेतुक ।
अन्यथाऽन्योऽपि तस्येत्थ, गमयेत् स्फुटनाद्यपि ॥३५॥

( अन्वय ) धूम, अपि, अत्र, अग्निदोषाद्, अनासत्य, अग्निहेतुक, अन्यथा, अन्य, अपि, इत्थम्, तस्य, स्फुटनादि, अपि, गमयेत् ।

वृत्ति —धूम –वह्न्यनुमापकतया पर्वतचत्वरगोष्ठमहानसादौ प्रसिद्ध पदार्थ । अपि–खलु । अत्र–अग्निहोत्रे । अग्निर्नोपादि–वह्निदोषप्रमुखम् । अनासृत्य–अननुसृत्य । अग्निहेतुक –अग्निर्वह्नि हेतुर्यस्य स तथा वह्निकारणक । धूमो वह्निदोषाद्यननुसृत्यैव यत्न सकाशादुत्पन्नो भवति न तु वह्निर्नोपादुत्पन्नात इति, एवञ्च वक्तृत्वमपि न आत्मगतादन तमूतदोषादरत्वनुमहति किन्तु आत्मन, सकाशादेव, तथा च वक्तृत्वस्य नात्मगतदोषभूताद्-सर्वज्ञत्वाद्युत्पत्तिरिति न तस्य सर्वज्ञत्वाभावाविनाभूतत्वमिति भाव । विपक्षे बाधकमाह द्वितीयार्द्धेन–अन्यथा–वक्तृत्वस्याऽऽत्मगतदोष भूतादसर्वज्ञत्वादुत्पत्तिस्वीकार । अन्य–अपर, धूम इति यावत् । अपि–खलु । इत्थम्–अनेन प्रकारेण । तस्य–वह्ने । स्फुल्नादि–वर्णादिदलनजनितस्फोटारवादि । अपि–सम्भावनायाम् । गमयेत्–अनुमापयेत् । यथा धूमेन वह्न्यनुमितिस्तथा वह्निदोषादूरव्यनु मिति स्यात् न च भवति एवञ्च सदोषादात्मन आत्मगतदोषाद्वा न वक्तृत्वोत्पत्ति स्वीकर्तुं शक्या, तथा च सति न वक्तृत्वेऽसर्व ज्ञत्वाविनाभूतत्वमिति न तेनासर्वज्ञत्वानुमितिरितिभाव ॥ ३५॥

सर्वज्ञे वक्तृत्वमुपपादयति—

जानाति बहु यः सम्यक्, वक्ति किञ्चित् स तत्र यत् ।
जानान सर्वमप्येव, ननु कस्मान्न वक्ष्यति ॥ ॥ ३६ ॥

(अन्वय ) य , सम्यक्, बहु, जानाति, स , तत्र, यत्, किञ्चित्, वक्ति, एवम्, सर्वम्, अपि, जानान , कस्मात्, न, वक्ष्यति ॥

वृत्ति —य –बुद्धिविषयीभूत कश्चित् । सम्यक्–समीचीनतया । बहु–बाढम् । जानाति–अवगच्छति । स –तादृश । तत्र–तस्मिन्

विषये। यत्-यस्माद्धेतो। किञ्चित् किमपि। वक्ति-निगदति। एवम्-अनेन प्रकारेण। सर्वम्-निखिलम्। अपि-खलु। जानान-जानन्, अवगच्छन्निति यावत्। कस्मात्-केन हेतुना। न-नहि। वक्ष्यति-निगदिष्यति। अपि तु सर्वं वदिष्यत्येवेति भाव। यस्मिन् विषये यो बहु जानाति तस्मिन् विषये सोऽप्रतिहत वक्ति यश्च पुन सर्वं जानाति स सर्वज्ञ कथं न ब्रूयादपि तु सर्वमेव ब्रूयादेवञ्च सर्वज्ञे वक्तृत्वमबाधितमेवेति भाव ॥ ३६ ॥

पुन श्लोकेनैकेन पूर्वोत्तरपक्षौ दर्शयति—

सर्वज्ञे न कचिद्दृष्ट-मसर्वज्ञत्वजं यदि।
न तद्दृष्टौ न दृष्ट यत्, तत्र तन्नेत्ययुक्तिमत् ॥ ॥ ३७ ॥

(अन्वय) कचित्, सर्वज्ञे, असर्वज्ञत्वजम्, न, दृष्टम्, यदि, तद्दृष्टौ, (यत्र) यत्, न, दृष्टम्, तत्र, तन्न, इति, अयुक्तिमत्, न?

वृत्ति —कचित्-कुत्रचित्। सर्वज्ञे-सर्वज्ञपदबोध्ये। असर्वज्ञत्वजम्-असर्वज्ञत्वजनित वस्तु। न-नहि। दृष्टम्-अवलोकितम्। (इति) यदि-चेत्। उच्यते इति शेष। समाधत्ते-द्वितीयार्द्धेन-(यत्र) तद्दृष्टौ-तदीयदर्शने, तदीयनेत्रे वा। यत्-यादृशम्। वस्त्विति यावत्। न-नहि। दृष्टम्-अवलोकितम्। तत्र-तस्मिन् स्थाने। तत्-तादृशम्। वस्त्विति शेष। न-नहि। वर्तते इति शेष। इति-अनेन प्रकारेण कल्पनम्। अयुक्तिमत्-अयुक्तम्। न-नहि? नन्व कार्यकरत्वात्, प्रभाया च वाकुत्यञ्जकत्वात्। अपि तु अयुक्तमेवेति। वाकुनो नन्व प्रभाभिव्यञ्जकत्व यथा—

"तथाभूता दृष्ट्वा नृपसदसि पाञ्चालतनया,
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं,
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥"
इति ।

अत्र श्लोके "नाद्यापि कुरुषु" इत्यत्र काको प्रश्नाभिव्यञ्जकत्वमपि, अन्यथा "मयि न योग्यः खेदः (अप्रियत्वेन ज्ञानम्) कुरुषु तु योग्यः" इत्यस्य काकुव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गत्वेन काव्यस्यास्य गुणीभूतव्यङ्ग्यत्वं स्यात् प्रश्नाभिव्यञ्जकत्वे तु तेनैव व्यङ्ग्येन वाच्यसिद्धौ पूर्वोक्तस्य व्यङ्ग्यार्थस्य वाच्यसिद्ध्यङ्गत्वाभावेन न गुणीभूतव्यङ्ग्यत्वमपि तु ध्वनित्वमेवेत्यन्यत्तरसं काव्यप्रकाशे तृतीयोल्लासे स्पष्टमिति ॥ ३७ ॥

नत्वादर्शनताऽस्यैव, साम्राज्यस्यैव नास्तिता ।
सर्वदर्शनं चास्य, पूर्वमेव निराकृतम् ॥ ॥ ३८ ॥

(अन्वय) अस्य, एव, अदर्शनत्वं, साम्राज्यस्य, एव, नास्तिता, न, च, च, अस्य सर्वं, अदर्शनम्, पूर्वम्, एव, निराकृतम् ।

वृत्ति—अस्य-तस्य, सर्वज्ञाधिकरणकासर्वज्ञत्वजनितगुणकर्मकावलोकनाभावस्य पुंस इति यावत् । इदं शब्दस्य सन्निकृष्टार्थबोधकस्य पूर्वपक्षनिरूपणप्रसङ्गे पूर्वमावेदितमवसेयम् । एव-खलु । अदर्शनता सर्वज्ञाधिकरणकासर्वज्ञत्वजनकगुणकर्मकानवलोकनत्वं । साम्राज्यस्य-मध्यज्ञत्वात्मकस्य । एव-खलु । नास्तिता-अभावः । न च-नैव । स्वीकर्तुं शक्येति । येनचिदुक्तेन सर्वज्ञोऽसर्वज्ञत्वजनित

वक्तृत्वादि वस्तु नावलोकित न तावता तस्मिन्तदसिद्धिर्भवितुमर्हति किन्तु सर्वैरदर्शनमेव प्रमाणीभवितुमर्हति न च तदस्तीत्युत्तरार्द्धेनाह सर्वैरदर्शनमित्यादि-च-पुन । अस्य-सर्वज्ञाधिकरणकासर्वज्ञत्वजन्य। सर्वै -निखिलैर्जनै । अदर्शनम्-अनवलोकनम । पूर्वम्-प्राक्। एव-खलु। निराकृतम्-दूरीकृतम, खण्डितमिति यावत् ॥ ३८ ॥

सिद्धान्ती पूर्वपक्षिहेतौ व्यभिचार दर्शयति—

साध्येनाप्रतिबन्धित्वाद्, व्यभिचार्येष सूरिणा।
विपक्षे बाधकाभावा-दुक्तस्तत्रापि सम्भवात् ॥ ॥ ३९ ॥

( अन्वय ) साध्येन, अप्रतिबन्धित्वात्, एष, ( हेतु ), सूरिणा, व्यभिचारी, उक्त, विपक्षे, बाधकाभावात्, तत्र, अपि, सम्भवात् ॥

वृत्ति —साध्येन-अनुमेयेन असर्वज्ञत्वेनेति यावत्। अप्रतिबन्धित्वात् व्याप्त्यात्मकसम्बन्धाभाववत्त्वात्। एष -अयम, हेतु -वक्तृत्वात्मक कारणम्। सूरिणा-विदुषा पूर्वपक्षिणा। व्यभिचारी-साध्याभाववद्वृत्तित्वात्मकव्यभिचारवान्। उक्त -प्रयुक्त । व्यभिचारित्वमेव प्रकटयति-विपक्षे इत्यादि। विपक्षे-निश्चितसाध्याभाववति साध्यप्रकारकनिश्चयविशेष्ये इति यावत्। सर्वज्ञत्वाभावात्मकसाध्यप्रतियोगिकाभाववति सर्वज्ञ इति यावत्। बाधकाभावात्-वक्तृत्वात्मकहेतो सत्त्वे प्रतिबन्धकाभावात्। तत्र-निश्चितसाध्याभाववति सर्वज्ञे। अपि-खलु। सम्भवात्-सत्त्वात् ॥३९॥

दृष्टवृत्तेऽप्यसर्वज्ञे, ज्ञानवैराग्यजा गुणा।
सदसत्त्वेन निर्णेतु, शक्यन्ते नैव सर्वथा ॥ ॥ ४० ॥

कायवाक्कर्मवृत्त्यापि, गुणदोषेन निश्चय ।
बुद्धिपूर्वोऽन्यथापि स्या-च्छैलूषस्येव ससदि ॥ ॥ ४१ ॥

( अन्वय ) असर्वज्ञे, देवदत्ते, अपि, ज्ञानवैराग्यजा , गुणा , सदसत्त्वेन, सर्वथा, निश्चेतुम् , नैव, शक्यन्ते ॥ ४० ॥

कायवाक्कर्मवृत्त्या, अपि, गुणदोषे, न, निश्चय , शैलूषस्य, ससदि, इव, बुद्धिपूर्वोऽन्यथा, अपि, स्यात् ॥ ४१ ॥

वृत्ति —असर्वज्ञे–सर्वज्ञतापरिरहिते, छद्मस्थे, किञ्चिज्ज्ञे वति यावत्। देवदत्ते–देवदत्ताभिधाने कस्मिंश्चित्पुरुषविशेषे। अपि–खलु। ज्ञानवैराग्यजा –सम्यग्ज्ञानवैराग्यसाहित्यजनिता । गुणा – उत्कर्षाधायका धर्मादय । सदसत्त्वेन–अस्तित्वनास्तित्वेन। सर्वथा–सर्वप्रकारेण। नैव–न खलु। निश्चेतुम्–निर्णेतुम् । शक्यन्ते– शक्यनाविषयाक्रियन्ते ॥ ४० ॥

कायवाक्कर्मवृत्त्या–काय शरीरञ्च वाक् वाणी च कायवाचम्, तस्य कर्मवृत्ति –कर्मात्मकव्यापार , कायकर्मवृत्त्या वाक्कर्मवृत्त्या चेत्यर्थ । गुणदोषे–सप्तम्यर्थो विषयता, तथा च गुणदोषविषयक इत्यर्थ , निश्चय –निर्णय । न–नहि। कायवाक्कर्मवृत्त्यापि गुण दोषयोर्निश्चयो नैव कर्तुं शक्यत इत्यर्थ । शैलूषस्य–नटस्य। ससदि–सभायाम । इव–यथा। बुद्धिपूर्वोऽन्यथा–बुद्धिपूर्वकमन्यथा करणम्। अपि–सभावनायाम्। स्यात्–भवेत। शैलूषा ससदि बुद्धिपूर्वक सामाजिकानान दर्शयितुमवास्तविकमन्यथाभूतमाचार दर्शयन्तीति तेषु न गुणदोषविनिश्चयस्तथाऽवरनेऽपि बुद्धिपूर्व- मन्यथाकरणसम्भवात्र तत्रापि गुणदोषविनिश्चय कर्त्तुमपीति भाव , एवञ्च साधयन्ति वक्तृत्वात्मकहेतोर्न निश्चयोऽपीति

न यतो वीतरागत्वे, तथा चेष्टोपपद्यते ।
क्लिष्टा प्रयोजनाभावा-न्ननु तत् किम् निश्चय ॥ ॥४२॥

( अन्वय ) यत, वीतरागत्वे, प्रयोजनाभावात्, क्लिष्टा, तथा चेष्टा, न, उपपद्यत, तत्, ननु निश्चय, किम्, न ।

वृत्ति —यत –यस्माद्धेतो । वीतरागत्वे रागराहित्ये । प्रयोजना भावात्–फलाभावात । क्लिष्टा–क्लेशावहा । तथाचेष्टा–बुद्धिपूर्वका यथा करणादि । न–नहि । उपपद्यते–उपपन्ना भवति । तत् तस्माद्धेतो । ननु–निश्चयेन । निश्चय –वक्तृत्वाभावादिनिर्णय । किम्–कथम् । न–नहि । अपि तु तथानिश्चयो भवेदेवेति वक्तृत्वादिदर्शनेन सर्वज्ञत्वमनुपपन्न स्यादिति भाव ॥ ४२ ॥

सिद्धान्ती समाधत्ते—

तथानामस्वभावत्वे, भवोपग्राहिकर्मण ।
कदाचिदुचितैपैव, तत किं नोपपद्यते ॥ ॥ ४३ ॥

( अन्वय ) भवोपग्राहिकर्मण, तथानामस्वभावत्वे कदाचित्, एषा, उचिता, एव, तत, किम्, न, उपपद्यते ? ॥

वृत्ति —भवोपग्राहिकर्मण –ससारसमर्थककर्मण सकाशात् । तथानामस्वभावत्वे–तादृशनामस्वभावताया सत्याम् । कदाचित् जातु चित् । एषा–इयम् चेष्टेति यावत् । उचिता–योग्या । एव–खलु । तत –तस्माद्धेतो । किम्–कथम् । न–नहि । उपपद्यते–युज्यते, अपितूपपद्यत एवेति ज्ञानवैराग्यादिजनित वक्तृत्वादिक सर्वज्ञेऽपि सम्भवत् तस्मिन् सर्वज्ञत्वाभाव साधयितुमर्हतीति भाव ॥ ४३ ॥

साक्षादगम्यमानेषु, ततस्तत्र विनिश्चय ।
स एव नैवमिति वा, छद्मस्थस्य न युज्यते ॥४४॥

( अन्वय ) साक्षात्, अगम्यमानेषु, "स एव नैव वा" इति, विनिश्चय छद्मस्थस्य, न, युज्यते, तत , तत्र, ( विनिश्चय )।

वृत्ति —साक्षात्-प्रत्यक्षम् । अगम्यमानेषु-अप्रतीयमानेषु पदार्थेषु । "स एव नैव वा" स पदार्थो इत्थम्भूतो नेत्थम्भूतो वा । इति एवम्भूत । विनिश्चय-विशेषतो निर्णय । छद्मस्थस्य-असर्वज्ञस्वरूपस्यात्मन । न-नहि । युज्यते-उपपद्यते । तत-तस्माद्धेतो । तत्र-तस्मिन् मध्ये । तादृश विनिश्चय स्वीकरणीय इति भाव ॥ ४४ ॥

न चात्र यस्तु सर्वज्ञ , स वक्ता नेति शक्यते ।
वक्तु तथाऽप्रसिद्धत्वा-दुच्यते चेन्न युक्तिमत् ॥४५॥
तदभावादथाऽवृत्ति-स्तत्र हेतोर्न मानत ।
न सिद्ध इति सन्यायाद् व्यतिरेको न पुष्कल ॥४६॥

( अन्वय ) तु, अत्र, य , सर्वज्ञ , स , वक्ता, न इति, न च, वक्तुम, शक्यते, अप्रसिद्धत्वात्, तथा, उच्यते, चेत्, न, युक्तिमत्, तदभावात्, अथ, तत्र, हेतो , अवृत्ति , न, मानत, इति, सन्यायात्, न , सिद्ध , व्यतिरेक , पुष्कल , न ॥

वृत्ति —तु-पुन । अत्र-अनुमानपरम्परायाम् । " य सर्वज्ञ स वक्ता न" इति-एवम् । न च-नहि ।

शक्यते–शक्तिमता भूयते। पूर्वपक्षी पुन शङ्कते–तथाऽप्रसिद्धत्वा दित्यादि–अप्रसिद्धत्वात् सर्वज्ञाधिकरणकवक्तृत्वाप्रसिद्धे। यथा–तेन प्रकारेण 'य सर्वज्ञ स यथा न" इत्येव प्रकारेणापि यावत्। उच्यते–पूर्वपक्षिणा मया प्रयोक्तु शक्यत चेत्–(इदम्) युक्तियुक्तम्। न–नहि। कुत इति चेत्तत्राह–तदभावात्–अप्रसिद्धत्वाभावात्। "वक्तृत्व न सर्वज्ञवृत्ति अप्रसिद्धत्वात्" इत्येव पूर्व पक्षिणा नो कथचित् शक्यते–वक्तृत्वस्य पक्षेऽप्रसिद्धत्वाद्धेतुतारसत्त्वेनासिद्धिदोषदुष्टतयाऽननुमापकत्वादिति भाव। अथ–समुच्चयार्थकमव्ययम्। तत्र–पूर्वपक्षिण। हेतो–असर्वज्ञत्वानुमापकलिङ्गस्य (तत्र–विपक्षे सर्वज्ञे) मानत–प्रमाणत। प्रवृत्ति–प्रवर्तनम्। न–नहि। एवञ्च तत्र हेतावव्यभिचारित्वमिति भाव। इति–एव प्रकारेण। सन्यायात्–समीचीनन्यायत, सत्तर्कादिति यावत्। स–प्रसिद्ध सर्वज्ञ, वीतरागत्वादिना प्रसिद्ध सर्वज्ञपदवाच्य। सिद्ध–निष्पन्न सिद्धिगत इति यावत्। व्यतिरेक–सर्वज्ञाभाव। पुष्कल–पर्याप्त। न–नहि। इति ॥ ४६ ॥

यच्च पूर्वम् "असौ न सर्वज्ञो वक्तृत्वात् देवदत्तवत्" इत्यनुमानेन सर्वज्ञत्व खण्डितम् "न वक्तृत्वमदेहस्य" इत्यादिना वक्तृत्वे रागादिनिबन्धत्वप्रतिपादनात् तत्प्रतिसमाधीयते सिद्धान्तिमि—यच्चोक्त न वक्तृत्वमदेहस्य (श्लो० २०) इत्यादिनेति—

६६–(मूलम्) यच्चोक्तं "न वक्तृत्वमदेहस्य" (श्लो० २०) इत्यादिना वक्तृत्व रागादिनिबन्धनमिति एतदपि पारम्पर्येण तेषा तन्निबन्धनत्वे दोषाभावात् अबाधकमेव,

कार्यस्य कियन्तमपि कालमवस्थानाविरोधात् तन्निनाश भावेऽपि घटादिविनाशासिद्धेः ।

अथ भाव लोके कपालादेरुपादानकारणस्य विनाशादेव कार्य्यस्य घटादेर्विनाशो दृश्यते न तु निमित्तकारणविनाशेऽपि कार्य्यनाशः क्वचिद्दृष्टो दृश्यते वा, दण्डादेरुपादानकारणस्य नाशेऽपि घटाद्यात्मककार्य्यदर्शनात् अन्यथा तन्निनाशभावेऽपि घटादिविनाशापत्तिः स्यात्, एवञ्च रागादीनां देहादिकार्य्यं प्रति निमित्तकारणत्वे न तदीयविनाशस्य देहनाशप्रयोजकत्वान्न तन्निवृत्तौ तन्निवृत्तिरिति ।

ननु रागादीनां वक्तृत्वोपादानकारणत्वे रागादिनाशप्रयोज्यो वक्तृत्वनाश इति रागादिविनाशे वक्तृत्वविनाशोऽप्यापद्येत, दृश्यते च रागादिविरहितस्यापि वक्तृत्वमिति वक्तृत्वोपादानकारणं पूर्वपक्षी पृच्छति–उपादाननिबन्धनमिति

समाधत्ते–उच्यत इति—

६९ (मूलम्)–उपादाननिबन्धनं किमस्य वक्तृत्वस्येति चेद्? उच्यते, भाषाद्रव्याण्यात्मप्रयत्नश्च, अत एव कश्चित् प्रक्रान्तवस्तुनि रागाद्यभावेऽपि सता साक्षादेव वक्तृत्वोपलब्धेः, अन्यथा तदभावप्रसङ्गात्, तथा सति व्यवहारोच्छेद इति,

भाषाद्रव्याण्यात्मन प्रयत्नश्च वक्तृत्वोपादाननिबन्धनमिति । ननु कथमेतज्ज्ञायत इति चेदत आह–अत एवेति–कश्चित्–

कुत्रचित् । प्रकृतवस्तुनि प्रकरणविषयीभूते पदार्थे, सम्यग्यर्थो विषयस्य तथा च प्रकरणविषयीभूतपदार्थविषयकरागाद्यभावेऽपि सताम्-सत्पुरुषाणाम् साक्षादेव-सद्य एव वक्तृत्वोपलब्धे वक्तृत्वदर्शनादिति रागाद्यभावेऽपि वक्तृत्वोपलब्धिदर्शनात् रागादयवक्तृत्वोपादानकारणत्व निरस्त वेदितव्यमिति भाव । अन्यथा-रागादीना वक्तृत्वोपादानकारणत्वस्वीकारे च रागाद्यभावे वक्तृत्वाभावप्रसङ्ग इति । जायता नाम वक्तृत्वाभाव कि नश्छिन्न मित्याह-तथेति वक्तृत्वाभावप्रसङ्गे सति व्याख्यानादिव्यवहार विलोपापत्तिरिति । एतन "नवक्तृत्वमदहस्य' इत्यादिनोपपादितमसर्वज्ञत्वमपहस्तित वेदितव्यम् ।

पूर्वं पूर्वपक्षिणा "विवक्षया च वक्तृत्व, साचेच्छाभावतो हि यत् । रागमतश्च वक्तृत्वात्, न सर्वज्ञ इतिस्थितम्"॥ इत्यनेन श्लोकेन वक्तृत्वस्य विवक्षाधीनत्वम् विवक्षायाश्च पुनरिच्छाभावाधीनत्वम्, इच्छाभावस्य रागाधीनत्वमिति वक्तृत्वस्य रागनिबन्धनत्वात् वक्तृत्वेन हेतुना सर्वज्ञत्वाभाव साधितस्तत्खण्डयितु मुपक्रमते-यदोक्तमित्यादि—

७० ( मूलम् )-यदोक्तं-" विवक्षया च वक्तृत्वम् " (श्लोक २१) इत्यादि एतदप्ययुक्तम्,

एतत्-कथितप्रकारेण वक्तृत्वहेतुकसर्वज्ञत्वाभावसाधनम् अपि-खलु अयुक्तम्-न युक्तमित्यर्थ, तत्र हेतुमाह-विवक्षेत्यादि—

७१ ( मूलम् )-विवक्षामन्तरेणापि क्वचिद्वक्तृत्वसिद्धेः सुप्तमत्तादिषु तथादर्शनात्,

विवक्षां विनापि क्वचित् वक्तृत्वदर्शनात् "विवक्षया च वक्तृत्वम्" इति तदुक्तिरसङ्गतेति भावः । ननु विवक्षां विनापि वक्तृत्वमिति भवता कथनमप्रमाणम् विवक्षयैवास्मदादीनां वक्तृत्वोत्पत्तेरतो विवक्षां विनापि वक्तृत्वं दर्शयति सुप्तेति-सुप्तमत्तादीनां जनानां पूर्वतो विवक्षाभावेऽपि वक्तृत्वं सर्ववादिसिद्धमिति भावः । सुप्तमत्तादिषु तथादर्शनात् इत्यस्य-सुप्तमत्तादिषु जनेषु विवक्षाऽभावेऽपि तथादर्शनात्-तेन प्रकारेण वक्तृत्वदर्शनात् इत्यर्थः। अथवा-तथादर्शनात् इत्यत्र तथाऽदर्शनात् इत्येवच्छेदः कार्यः । सुप्तमत्तादिषु तथा-तेन प्रकारेण विवक्षापूर्वकत्वेन वक्तृत्वस्य अदर्शनात्-अनुपलब्धेरित्यर्थो बोध्यः उभयथापि ग्रन्थसङ्गतेः ।

ननु सुप्तमत्तादिषु विवक्षा नास्ति कथम् वक्तृत्वानुपपत्तेरेवञ्च दृष्टान्तासङ्गतिमाशङ्कते तत्रापीति--

७२ (मूलम्)-तत्रापि साऽस्त्येवेति चेत्, न, तथा प्रतीत्यभावात्, प्रबुद्धादावुक्तस्मरणानुपलब्धेः,

तत्रापि-सुप्तमत्तादिजनेष्वपि सा-बुद्धिविषयीभूता वक्तृत्वकारणीभूता विवक्षेत्यर्थः, समाधत्ते-नेति-यदि तत्रापि विवक्षा स्यात्तदा तेषु जनानां विवक्षुरयमिति प्रतीतिः स्यात् न च भवति प्रतीतिरतः प्रतीत्यभावात् तेषु वक्तृत्वाभाव उपपादनीयः । तथा-तेन प्रकारेण विवक्षुत्वप्रकारेण प्रतीतेरभावादित्यक्षरार्थः । न चैतावता सुप्तमत्तादयो विवक्षाभाववन्तो विवक्षाभाववत्त्वेन प्रतीयमानत्वात् इत्येवमनुमाने हेतुसाध्ययोरैक्यात् "अयं घटो घटत्वात्" इति वदनुमानमप्रयोजकं स्यादित्याशङ्क्य समाधत्ते-प्रबुद्धेति-स्वप्नात् उन्मादावस्थायाश्च विनिर्मुक्ते प्रबुद्धादौ जने प्रागुक्तस्य स्मरणं न

भवति तस्मात् तदवस्थाया वक्तृत्वस्य विवक्षापूर्वकत्वाभाव स्वी करणीयत्रामापद्यते, विवक्षयोत्तरस्य स्मरणं लोके दृश्यते यच्चान्य थोक्तं भवति न तत्स्मरणपथमायातीति निश्चितम् एवञ्च शयनादित प्रबुद्धस्य जनस्य प्रागुक्तस्मरणाभावात्तदीयवक्तृत्वस्य विवक्षापूर्वकत्व न सम्भवतीति भाव ।

ननु प्रबुद्धादौ जने प्रागुक्तस्मरणानुपलब्धौ सत्यामपि मया विवक्षा स्वीक्रियत एवेति चेत् का क्षतिरित्याशङ्क्य समाधत्ते- तथापीति—

७३ ( मूलम् ) तथापि तत्कल्पनेऽतिप्रसङ्ग , कातर-विवक्षाया क्वचिच्छूरशब्दप्रयोगदर्शनात्,

तथापि प्रबुद्धादौ जने प्रागुक्तस्मरणानुपलब्धौ सत्यामपि । तत्कल्पने विवक्षाभ्युपगमे अतिप्रसङ्ग -अन्यथाप्यन्यदनिष्टस्यापत्ति स्वीकरणा स्यात् । विवक्षया वक्तृत्वमितिनियमाभावमुपपादयति -कातरविवक्षायामिति-अय भाव -' तत्पदार्थविवक्षाया तद्वाचक-शब्दप्रयोग , तत्पदार्थाविवक्षाया तत्पदार्थवाचकशब्दाप्रयोग इत्येव मन्वयव्यतिरेकौ यदि वक्तृत्वविवक्षयो स्यात तदा विवक्षया वक्तृत्वमित्येव नियम स्वीकरणीय स्यात् तावेव तु न तयो स्तो यत कातरविवक्षाया कातरशब्दे प्रयोक्तव्ये क्वचित् शूरशब्द प्रयोगोऽपि दृश्यते, एवञ्च कातरविवक्षाया कातरशब्दप्रयोगाभावा दन्वयव्यभिचार एव शूरपदार्थाविवक्षाया शूरशब्देऽप्रयोक्तव्येऽपि शूरशब्दप्रयोगदर्शनाद् व्यतिरेकव्यभिचारोऽपि वर्तते तथा च " विवक्षया वक्तृत्वम " इतिनियमो नेति सिद्धम । ननु कातर विवक्षया शूरशब्दप्रयोगस्थलेऽपि कातरविवक्षानन्तर शूरविवक्षात

शूरशब्दप्रयोगदर्शनात् न व्यतिरेकव्यभिचार इत्याशङ्कते-तत्रेति समाधत्ते-नेति—

७४ (मूलम्)-तत्राप्यन्तराले शूरविवक्षाऽस्तीतिचेत्? न, प्रमाणाभावात्, तच्छब्दप्रयोगान्यथानुपपत्ति प्रमाणमिति चेत्, न, सन्देहानिवृत्ते, अविवक्षापूर्वकत्वेऽपि विरोधासिद्धे,

प्रमाणाभावात्-आन्तरालिकशूरविवक्षाया प्रमाणाभावादित्यर्थ। ननु शूरविवक्षा विना तच्छब्दप्रयोगान्यथानुपपत्त्याऽर्थानुपपत्तिरेव तत्रप्रमाणमिति शङ्कते-तच्छब्देति—समाधत्ते-नेत्यादिना-अयं भाव -यदि शूरविवक्षा पुरस्कृत्य शूरशब्दप्रयोग स्यात्तदा सन्देह निवृत्त्या भवितव्यम अर्थात् अयं शूरोऽशूरो वेति सन्देहेन न भवितव्यम्, तद्विवक्षया तच्छब्दप्रयोगश्च सन्देहनिवर्तको भवति प्रकृते च कातरविवक्षाकालिकशूरशब्दप्रयोगस्थले "अयं शूर एव" इत्याकारकनिश्चयप्रयोज्या सन्देहनिवृत्तिर्न भवतीत्यत शूरशब्द प्रयोगस्याविवक्षापूर्वकत्वकल्पनेऽपि कश्चिद्विरोधो न दृश्यतेऽत आन्तरालिकशूरविवक्षायामर्थापत्तिरप्रमाणमिति सिद्धम।

ननु तत्पदार्थविवक्षाऽभावेऽपि तच्छब्दप्रयोगश्चेत्, प्रयोगस्य निर्हेतुकत्वमायाति ततश्च यदन्निर्हेतु" ... वैदिक भवतीति सर्वदा तच्छब्दप्रयोगापत्तेरन ... शूर" इति प्रयोगाद्विरोध ...

समाधत्ते ...

७५ (मूलम्) तदभावे स्वहेतुत्वेन सदा तच्छब्दप्रयोगापत्तेर्विरोधसिद्धिरिति चेत् न, अहेतुकत्वासिद्धेः, तथाविधभाषाद्रव्यात्मप्रयत्नहेतुकत्वात्,

तद्विवक्षाभावेऽपि तत्प्रयोगे भवद्भिः स्वीकृतस्याहेतुकत्वस्या सिद्धत्वादिति, कुत इति चेत्-तथाविधेति-भाषाद्रव्यात्मप्रयत्नानां वक्तृत्व (शब्दप्रयोग) प्रति हेतुत्वस्य पूर्वं निरूपितत्वात् तथा चाहेतुकत्व शब्दप्रयोगस्य नापादनीयतामर्हतीति कुत सर्वदा तच्छब्दप्रयोगापत्तिरिति भाव ।

ननु भाषाद्रव्यात्मप्रयत्नानां वक्तृत्वहेतुत्वेन यद्योजनम्, तच्च राजाज्ञेति किं प्रमाणमित्याशङ्क्य समाधत्ते-तेषां चेति—

७६ (मूलम्)-तेषां च तथाविधत्वस्यादृष्टादिनिबन्धनत्वात्, अन्यथा, विवक्षाया अपि सदाभावनोक्तदोषानतिवृत्ते,—

तेषाम्-भाषाद्रव्यात्मप्रयत्नानाम् च-पुन तथाविधत्वस्य-वक्तृत्वहेतुत्वस्य अदृष्टादिनिबन्धनत्वात्-अदृष्टादिप्रयोज्यत्वात् । ननु भाषाद्रव्यादीनां तथाविधत्वस्यादृष्टादिनिबन्धनत्वं न मया स्वीक्रियते इतिचेत्तत्राह-अन्यथेति-अन्यथा-भाषाद्रव्यादीनां वक्तृत्वहेतुत्वस्यादृष्टादिनिबन्धनत्वास्वीकारे विवक्षाया अपि सदा-सर्वदा-भावेन सत्त्वेन उक्तदोषानतिवृत्ते-प्रागुक्तदोषानतिक्रमणात्, विवक्षाया अप्यहेतुकत्वप्रसक्त्या "विवक्षया च वक्तृत्वम्" इत्यादि दोषानवकाशादिति भाव ।

शूरशब्दप्रयोगदर्शनात् न व्यतिरेकव्यभिचार इत्याशङ्कते-तत्रेति समाधत्ते-नेति—

७४ (मूलम्)-तत्राप्यन्तराले शूरविवक्षाऽस्तीति चेत्? न, प्रमाणाभावात्, तच्छब्दप्रयोगान्यथानुपपत्तिः प्रमाणमिति चेत्, न, सन्देहानिवृत्तेः, अविवक्षापूर्वकत्वेऽपि विरोधासिद्धेः,

प्रमाणाभावात्-आन्तरालिकशूरविवक्षायां प्रमाणाभावादित्यर्थः। ननु शूरविवक्षां विना तच्छब्दप्रयोगान्यथानुपपत्त्याऽर्थापत्तिरेव तत्रप्रमाणमिति शङ्कते-तच्छब्देति—समाधत्ते-नेत्यादिना-अयं भावः-यदि शूरविवक्षां पुरस्कृत्य शूरशब्दप्रयोगः स्यात्तदा सन्देहनिवृत्त्या भवितव्यम् अर्थात् अयं शूरोऽशूरो वेति सन्देहेन न भवितव्यम्, तद्विवक्षया तच्छब्दप्रयोगश्च सन्देहनिवर्तको भवति प्रकृते च कातरविवक्षाकालिकशूरशब्दप्रयोगस्थले "अयं शूर एव" इत्याकारकनिश्चयप्रयोज्या सन्देहनिवृत्तिर्न भवतीत्यतः शूरशब्दप्रयोगस्याविवक्षापूर्वकत्वकल्पनेऽपि कश्चिद्विरोधो न दृश्यतेऽत आन्तरालिकशूरविवक्षायामर्थापत्तिरप्रमाणमिति सिद्धम्।

ननु तत्पदार्थविवक्षाऽभावेऽपि तच्छब्दप्रयोगश्चेत् तच्छब्दप्रयोगस्य निर्हेतुकत्वमायाति ततश्च यद्यन्निर्हेतुकं भवति तत्तत्सार्वदिकं भवतीति सर्वदा तच्छब्दप्रयोगापत्तेः शूरवक्तव्येऽपि "शूर शूर" इति प्रयोगाद्विरोधः स्यादित्याशङ्कते-तदभाव इति—

समाधत्ते नेत्यादि—

भगवन सर्वज्ञत्यामनस्कत्वेन इच्छैव नोपपद्यते इति तदीय वक्तृत्वस्य विवक्षाहेतुकत्वाभावेन "विवक्षया च वक्तृत्वम्" इत्यादि दोषोऽनुपपन्न एव पूर्वपक्षिणामित्याशयेनाह—अमन स्कत्वेन चेत्यादि ।

७७ (मूलम्)-अमनस्कत्वेन च भगवत इच्छानुपपत्तेः तथावाग्योगस्य च चेष्टामात्रत्वात्, "ततश्च साचेच्छा भावता हि यद्राग" इत्येतदप्यपार्थकमेव, तत्रेच्छाभावसिद्धेः।

ननु वाग्योगात्मक वक्तृत्व विवक्षा विनाऽनुपपन्नमिति चेत्तत्र तथेति—तथा वाग्योगस्य ज्ञात्यभिधानप्रयोज्यतीयमानवक्तृत्व स्य च—पुनः, चेष्टामात्रत्वात्—केवलचेष्टात्मकत्वादित्यर्थः । एवस्थिते फलितमाह—ततश्चेति ततश्च—वाग्योगस्य तस्येच्छाप्रयोज्यत्वाभावादय च। "सा चेच्छाभावतो हि यद्राग" इत्येतदपि पूर्वोक्तम् व्यर्थमेवे त्यर्थ, तत्र हेतुमाह—तत्रेच्छेति—तत्र भगवति सर्वज्ञे इच्छाभावस्य असिद्धेः—अनिष्पत्तेः । एवञ्च न रागवेदितो दोष इति भाव ।

ननु भगवतीच्छाभावासिद्धिप्रख्यापनेनेच्छाभावप्रयोजकरागा भावोऽप्यर्थत साध्यते स एव (इच्छाभाव एव) तु नाद्यापि नासिद्धस्तत कथमिच्छाभावप्रयोजको रागो भगवति न स्वीक्रियता मितिचेत्तत्राह—भावेऽपीति—

७८ (मूलम्)-भावेऽपि शुद्धेच्छाया रागायोगात् तथा लोकप्रतीते ।

(इच्छाभावस्य भगवति) भावेऽपि—सत्त्वेऽ स्त्वेऽपीति यावत ।

च्छाया । रागायोगात्-रागासम्बन्धादित्यर्थः । ननु भगवति वर्तमानाया इच्छाया शुद्धत्व तत्प्रयोज्य रागायोगित्वञ्चापि न मया स्वीक्रियते इति चेत्तत्राह-नवेति-तथा-भगवदिच्छाया शुद्धत्वेन रागायोगित्वेन च लोकप्रतीते-सर्वजनीनप्रत्ययात् भगवत इच्छा शुद्धा रागायोगिनी चेति सर्वेषामनुभवादिति यावत् ।

एतावता किमायातमित्याह-नतश्चेति—

७० (सूत्रम्)-ततश्च वक्तृत्वादसर्वज्ञ इति वाङ्मात्रमेव ॥

ततश्च-लोकाना तथाप्रतीतेश्च, "असौ न सर्वज्ञो वक्तृत्वात्" इति वचनमात्र न किञ्चिदेतदिति स्थितम्, मीमासकादिभिरापादिता सर्वज्ञासिद्धियुक्तितिमेव सत्तर्कप्रकरै खण्डयित्वा सम्प्रत्युपसहरन्ति सूरिराज इतिसिद्धिन्द्रजौस्कदम्बके -सङ्क्षेपादितीत्यादिना—

सक्षेपादिति सर्वज्ञ, सन्न्यायोक्त्या निदर्शित ।
सामान्येन विशेषस्तु ज्ञेयस्तद्वाक्यतो बुधै ॥ ४७ ॥

(अन्वय) इति, सङ्क्षेपात् सन्न्यायोक्त्या, सामान्येन, सर्वज्ञ, निदर्शित, तु विशेष, बुधै, तद्वाक्यत, ज्ञेय ॥

वृत्ति —इति-पूर्वनिगदितप्रकारे । सक्षेपात्-समासत । सन्न्यायोक्त्या-समीचीनतर्कोपस्थानद्वारेण । सामान्येन-सामान्ये नत्यत्र तृतीयार्थोऽभेद "धान्येन धनवान्" इत्यादिवत् तथा च सामान्याभिन्न इत्यर्थ । सर्वज्ञ-सकलपदार्थज्ञाता । सामान्य सर्वज्ञ इति सङ्कलितोऽर्थ, सर्वज्ञसामान्य इति तु फलितार्थोऽवसेय । निदर्शित-निरूपित, सिद्धान्तित इति यावत् । तु-पुन-।

भगवत मत्रशस्यामनस्त्वेन इच्छैव नोत्पद्यत इति तदीय वक्तृत्वस्य विवक्षाहेतुकत्वाभावेन "विवक्षया च वक्तृत्वम्" इत्यादि दोषोऽनुपपन्न एव पूर्वपक्षिणामित्याशयेनाह–अमन स्कत्वेन चेत्यादि ।

७७ (मूलम्)–अमनस्कत्वेन च भगवत इच्छानुपपत्ति' तथावाग्योगस्य च चेष्टामात्रत्वात्, "ततश्च साचेच्छा भावना हि यद्राग" इत्यतदप्यपास्तमेव, तेनेच्छाभावमिदे,

ननु वाग्योगात्मक वक्तृत्व विवक्षा विनाऽनुपपन्नमिति चेत्तत्राह–तथेति–तथा वाग्योगस्य जात्यभिधानप्रयोज्यमानवक्तृत्व स्य, च–पुन, चेष्टामात्रत्वात्–केवलचेष्टात्मकत्वादित्यर्थ । एवस्थिते फलितमाह–ततश्चेति ततश्च–वाग्योगस्य तत्येच्छाप्रयोज्यत्वाभावादेव च। "सा चेच्छाभावतो हि यद्राग" इत्येतदपि पूर्वोक्तम् व्यथमेवे त्यर्थ, तत्र हेतुमाह–तत्रेच्छेति–तत्र भगवति सर्वज्ञे इच्छाभावस्य असिद्धे –अनिष्पत्ते । एवञ्च न प्रागावदितो दोष इति भाव ।

ननु भगवतीच्छाभावासिद्धिप्रदर्शनेनेच्छाभावप्रयोजकरागा भावोऽप्यर्थत साध्यत स एव (इच्छाभाव एव) तु नाद्यापि नासिद्धस्तत कथमिच्छाभावप्रयोजको रागा भगवति न स्वीक्रियता मितिचेत्तत्राह–भावेऽपीति—

७८ (मूलम्)–भावेऽपि शुद्धेच्छाया रागायोगात् तथा लोकप्रसिद्धे' ।

(इच्छाभावस्य भगवति) भावेऽपि–सत्त्वेऽपि, विद्यमान त्वेऽपीति यावत्, शुद्धेच्छाया–भगवत्सम्बन्धिन्या विशुद्धाया

इच्छाया । रागायोगात्-रागासम्बन्धान्नित्यर्थ । ननु भगवति वर्तमानाया इच्छाया शुद्धत्व तत्प्रयोग्य रागायोगित्वञ्चापि न मया स्वीक्रियते इति चेत्तत्राह-तत्रेति-तथा-भगवदिच्छाया शुद्धत्वेन रागायोगित्वेन च लोकप्रतीते -सर्वजनीनप्रत्ययात् भगवत इच्छा शुद्धा रागायोगिनी चेति सर्वेषामनुभवादिति यावत् ।

एतावता किमायातमित्याह-ततश्चेति—

७९ (मूलम्)-ततश्च वक्तृत्वादसर्वज्ञ इति वाङमात्रमेव ॥

ततश्च-लोकाना तथाप्रतीतेश्च, "असौ न सर्वज्ञो वक्तृत्वात्" इति वचनमात्र न किञ्चिदतदिति स्थितम, मीमासकादिभिरापादिता सर्वज्ञासिद्धियुक्तिततिमेव सत्तर्कप्रकरै खण्डयित्वा सम्प्रत्युपसहरति सूरिराज कतिभिश्चिच्छ्लोकस्तम्भकै -सङ्क्षेपादितीत्यादिना—

सक्षेपादिति सर्वज्ञ, सन्न्यायोक्त्या निदर्शित ।
सामान्येन विशेषस्तु ज्ञेयस्तद्वाक्यतो बुधै ॥ ८७ ॥

(अन्वय) इति, सङ्क्षेपात् सन्न्यायोक्त्या, [illegible] सर्वज्ञ, निदर्शित, तु विशेष, बुधै, तद्वाक्यत, [illegible]

वृत्ति —इति-पूर्वनिगदितप्रकारे । सङ्क्षेपात् [illegible] सन्न्यायोक्त्या-समीचीनतर्कोपस्थानद्वारेण । [illegible] नेत्यत्र तृतीयार्थोऽभेद "धान्येन धनवान्" [illegible] सामान्याभिन्न इत्यर्थ । सर्वज्ञ -[illegible] सर्वज्ञ इति सङ्कलितोऽर्थ, सर्वज्ञसामान्य [illegible] निदर्शित -निरूपित, सिद्धान्तित [illegible]

विशेष–सर्वज्ञविशेष, तत्तत्सर्वज्ञ इति यावत् । सुधै–मध्यैश जिज्ञासुभिमनीषिभि । तद्वाक्यत–सर्वज्ञवाक्यत, कर्तृत्वसूचा वागमात्मकवचनत इति यावत् । ज्ञेय–अवबोध्य । सत्तर्क-कदम्बस्वरूपकसाधनविषयीभूतसर्वज्ञमान्यप्रदर्शितागमवाक्येन सर्वज्ञविशेषो बोध्य इति भाव ॥ ४७ ॥

इदानीं जगत्कर्तारमपक्ष्य सर्वज्ञ विशेषयति सूरिराजस्तत्कार्य प्रदर्शनमुखेन वाक्यति–

वाक्यलिङ्गा हि वक्तारो, गुणदोषविनिश्चये ।
क्रियालिङ्गा हि कर्तार, शिल्पमार्गे यथैव हि ॥४८॥

(अन्वय) गुणदोषविनिश्चये, वाक्यलिङ्गा, वक्तार, हि, यथैव, हि, शिल्पमार्गे, क्रियालिङ्गा, कर्तार हि ।

वृत्ति —गुणदोषविनिश्चये–गुणदोषयोर्विशेषेणनिश्चये–निश्चय विषये । वाक्यलिङ्गा –दृष्टादृष्टार्थविषयकबोधजनकसविशेषणा ख्यातात्मक वाक्यमेव लिङ्ग गमक येषा ते तथा । वक्तार–वस्तुतत्त्वाभिधानादिप्रयोज्यगीयमानवक्तृत्वन्त । उच्यन्ते इति शेष । हि–निश्चयेन । यथैव येन प्रकारेण खलु । हि निश्चयेन शिल्पमार्गे–प्रासादादिनिर्माणपद्धतौ । क्रियालिङ्गा –प्रासादादि रचनात्मिका क्रिया–लिङ्ग येषा ते तथा । कर्तार–कर्तृत्वगुण सम्पन्ना । उच्य ते इति शेष । हि–निश्चयेन । "हि हेतावधारणे" त्यमरकोश । वक्तार आत्मसम्बन्धिनोर्गुणदोषयोर्निरूपका । कर्तारस्तु कार्य इतिप्रासादादिगुणदोषविवेचका इतिमहदन्तरं तयोरिति भाव ॥ ४८ ॥

इदानीं मन्ता प्रयत्नेन प्रयासेन च परैरपक्षिप्यमाण सत्तर्क-निराकृत स्तन संस्थापित प्रमात्मकज्ञानविषयीकृत सर्वज्ञ परिभावयन्नि-त्यवदन्-दृष्टशास्त्रेति—

दृष्टशास्त्राविरुद्धार्थं, सर्वसत्त्वसुखावहम् ।
मितं गम्भीरमाह्लादि-वाक्यं यस्य स सर्ववित् ॥४९॥

(अन्वय) यस्य, वाक्यम्, दृष्टशास्त्राविरुद्धार्थम्, सर्वसत्त्व सुखावहम्, मितम्, गम्भीरम्, आह्लादि, (च, भवत्) स, सर्ववित् ॥ ४९ ॥

वृत्ति —यस्य-बुद्धिविषयीभूतस्य । वाक्यम्-सविशेषणाग्या सात्मोपदेशवचनम् । दृष्टशास्त्राविरुद्धार्थम्-दृष्ट -अवलोकित, ज्ञानविषयीकृत इति यावत् शास्त्राविरुद्ध -शास्त्रसम्मत अर्थोऽभि-धेयो यस्य तत्तथा, अबाधितार्थविषयकबोधजनकमिति यावत् । सर्वसत्त्वसुखावहम्-सुख शर्म्म आवहति करोतीति सुखावहम्, सर्वाणि निखिलानि च तानि सत्त्वानि जीवा इति सर्वसत्त्वानि, तेषां सुखावहमिति तथा, सापेक्षत्वेऽपि गमकत्वात् समासोऽ-भ्युपगन्तव्य । सर्वजनकल्याणनिधानमित्यर्थ । मितम्-परिमितम्, यावदर्थपदमिति यावत् । गम्भीरम्-गूढाभिप्रायम्, यत्सम्बन्धि-नमभिप्राय गौतमप्रमुखा गणधरा एव जानन्ति न तु सर्व कोऽपीति । आह्लादि-आह्लादयति-चेत प्रसन्न करोति तच्छील तथा "अजाते शीले" ५।१।१५४॥ इति शीले णिन्प्रत्यय । आह्लादजनकमित्यर्थ । भवेदिति शेष । स-पूर्वोक्तार्थप्रतिपादकवाक्यवत्त्वेन बुद्धिविषयीभूत । सर्ववित्-सर्वं निखिलं त्रिकालव्यापिनं विषयं वेत्ति जानातीति सर्ववित् सर्वज्ञो बुधैरवसेय । सर्वज्ञसर्वविदित्यनर्थान्तरम् ॥ ४९ ॥

इदानीं जिनमेव सर्वज्ञं निगमयति-एवम्भूतमित्यादि—

एवम्भूतं तु यद्वाक्यं, जैनमेव ततः स वै ।
सर्वज्ञो नान्य एतच्च, स्याद्वादोक्त्यैव गम्यते ॥५०॥

( अन्वय ) तु, यद्, एवम्भूतम्, जैनम्, एव, वाक्यम्, ततः, वै, सः, सर्वज्ञः, अन्यः, न, एतत्, च, स्याद्वादोक्त्या, एव, गम्यते ॥ ५० ॥

वृत्तिः—तु-पुनः । यत्-यस्माद्धेतोः । एवम्भूतम्-दृष्टेष्टाविरुद्धार्थादि पूर्वनिगदितस्वरूपम् । जैनम्-जयति रागादीनिति जिनस्तीर्थकृत्, तस्य इदम् तथा, जिनदेवप्रतिपादितमित्यर्थः । एव-खलु । वाक्यम्-वचनम् । ततः-तस्माद्धेतोः । वै-निश्चयेन । सः-जिनः । सर्वज्ञः-इष्टानिष्टाखिलपदार्थनिचयविज्ञाता । मन्तव्य इति शेषः । अन्यः-जिनेतरः । न-नहि । सर्वज्ञः स्वीकरणीय इति शेषः । कुतः एतदवगम्यते इत्यत आह-एतच्चेति-एतत्-जिनस्य सर्वज्ञत्वम् च-पुनः । स्याद्वादोक्त्या-अनेकान्तवादव्यवस्थानेन । एव-खलु । गम्यते-अवबुध्यते । अनेकान्तवाद एव मुक्त्यादिव्यवस्था समुपपद्यते, सचानेकान्तवादो जिनव्यवस्थापित एवेति स एवानेकान्तवादज्ञाता अत एव सर्वज्ञ इति भावः ॥ ५० ॥

ननु स्याद्वाद एव न स्वीक्रियतां तथा च कथं सर्वज्ञसिद्धिरित्याशङ्कय श्लोकद्वयेनैकान्तवाद दूषयति "न नित्यैकान्तवादे यदित्यादि"—

न नित्यैकान्तवादे यद्, बन्धमोक्षादि युज्यते ।
अनित्यैकान्तवादेऽपि, बन्धमोक्षादि युज्यते ॥ ५१ ॥

(अन्वय) यत्, नित्यैकान्तवादे, बन्धमोक्षादि, न, युज्यते, अनित्यैकान्तवादे, अपि, बन्धमोक्षादि, (न) युज्यते ।

वृत्ति —यत्-यस्माद्धेतोः । नित्यैकान्तवादे-नित्यत्वाभावे कान्तवादे -एकवस्त्वधिकरणकनित्यानित्यत्वाद्येकमात्रधर्मप्रकाशक दर्शनम् नित्यैकान्तवादस्तस्मिंस्तथा । बन्धमोक्षादि-समारापवर्गादि । न-नहि । युज्यते-उपपद्यते । अनित्यैकान्तवादे-अनित्य मस्थायी स्थायी चाभावका तवादोऽनित्यैकान्तवादस्तस्मिंस्तथा । अपि-खलु । बन्धमोक्षादि-समारापवर्गादि । (न) युज्यते-उपपद्यते ॥५१॥

नित्यैकान्तवादे बन्धमोक्षानुपपत्तिं दर्शयति श्लोकद्वितयेन—

जीवः स्वभावभेदेन, बध्यते मुच्यते च सः ।
ऐक्यापत्तेस्तयोर्नित्यं, तथाबन्धादिभावतः ॥५२॥

(अन्वय) जीवः, स्वभावभेदेन, बध्यते, च, नित्यम्, सः, (स्वभावभेदेन) मुच्यते, तयोः, तथाबन्धादिभावतः, ऐक्यापत्तेः ।

वृत्ति —जीवः-जीवात्मा । स्वभावभेदेन-भिन्नेन स्वभावेन । बध्यते-सस्त्रियते, बन्धं नीयते इति यावत् । च-पुनः । सः-जीवः । (स्वभावभेदेन-भिन्नेन स्वभावेन) मुच्यते-मुक्तिं नीयते । तयोः-बद्धमुक्तयोः । नित्यम्-सर्वदा । तथाबन्धादिभावतः-समानबन्धमोक्षादिभावतः । ऐक्यापत्तेः-एकत्वापत्तितः । ऐक्यमापन्नयोस्तयोर्बन्धमोक्षादि न युज्यते इति भावः ॥५२॥

तयोरत्यन्तभेदेऽपि, न बद्धो मुच्यते कश्चित् ।
एवं च सर्वशास्त्रोक्तं, भावनादि निरर्थकम् ॥५

( अन्वय ) तयो , अत्यन्तभेदे, अपि, बद्ध , क्वचित्, न, मुच्यते, एवञ्च, सर्वशास्त्रोक्तम्, भावनादि, निरर्थकम् ।

वृत्ति —तयो -बन्धमोक्षयो । अत्यन्तभेदे-अतिशयवैधर्म्ये । अपि-सम्भावनायाम् । बद्ध -सयत । क्वचित्-कुत्रचित् । न-नहि । मुच्यते-मुक्तो भवति, मुक्तो भवितु शक्नोतीति यावत् । एवञ्च-बद्धस्य मुक्त्यस्वीकारे । सर्वशास्त्रोक्तम्-समस्तागमप्रतिपादितम् । भावनादि-भावनाप्रमुखम् । निरर्थकम्-व्यर्थम् । यदि बद्धस्य मुक्तिर्नास्तीति निश्चयस्तदा निखिलशास्त्रप्रतिपादितन भावनादिना ऽनुष्ठितेन कृतमिति भाव ॥ ५३ ॥

नाचेतनस्य बन्धादि, केवलस्यैव युक्तिमत् ।
अप्रतीतेस्तदेकत्व-नित्यत्वादेश्च सर्वथा ॥ ५४ ॥

( अन्वय ) केवलस्य, अचेतनस्य, एव, बन्धादि, न, युक्तिमत्, अप्रतीते , च, तदेकत्वनित्यत्वादे , सर्वथा, (अप्रतीते ) ।

वृत्ति —केवलस्य-सजातीयद्वितीयरहितस्य । अचेतनस्य-चैतन्यविरहितस्य । प्रधानादेरित्यर्थ । एव-खलु । बन्धादि-ससारादि । "आत्मा न बध्यते नापि मुच्यते किन्तु प्रकृतिर्बध्यते मुच्यत" इत्यादिना सांख्यदर्शने प्रतिपादितमिति यावत् । न-नहि । युक्तिमत् युक्तम् । अप्रतीते -अचेतनस्य प्रधानस्य मुक्ते प्रतीत्यभावात्, बन्धस्यापि प्रतीत्यभावाच्च । च-पुन । तदेकत्व नित्यत्वादे - अचेतनैकत्वनित्यत्वादे । अप्रतीते -प्रतीत्यभावात् ॥ ५४ ॥

सन्तत्यपेक्षयाऽप्येत-न्निरन्वयविनाशिषु ।
तदभावात्तथाभेदा-देकान्तेन न युज्यते ॥ ५५ ॥

(अन्वय) सन्तत्यपेक्षया, अपि, निरन्वयविनाशिषु, तथा भेदात्, तदभावात्, एकान्तेन (बन्धमोक्षादि) न, युज्यते ।

वृत्ति —सन्तत्यपेक्षया—सन्तानमपेक्ष्य । अपि—खलु । निरन्वयविनाशिषु—निरन्वयविनाशवत्सु पदार्थेषु । तथा—तेन प्रकारेण । भेदात्—वैधर्म्यात्। तदभावात्—एकत्वानित्यत्वाद्यभावात्। एकान्तेन—एकान्तप्रकारेण । न—नहि । युज्यते—उपपद्यते ॥ ५५ ॥

एतच्च सर्वमन्यत्र, प्रबन्धेनोदितं यतः ।
ततः प्रतन्यते नेह लेशतस्तूक्तमेव हि ॥ ५६ ॥

(अन्वय) च, एतत्, सर्वम्, यतः, अन्यत्र, प्रबन्धेन, उदितम्, ततः, इह, न, प्रतन्यते, हि, लेशतः, पुनः उक्तम्, एव ॥ ५६ ॥

वृत्ति —च—पुनः । एतत्—प्रत्यक्षमावेदितम् । सर्वम्—निखिलम् । यतः—यस्माद्धेतोः । अन्यत्र—ग्रन्थान्तरे। प्रबन्धेन—प्रकरणेनातिदीर्घेण। उदितम्—निरूपितम् । ततः—तस्माद्धेतोः । इह—अस्मिन् सत्यप्रकरणे । न—नहि । प्रतन्यते—विस्तार्यते । हि—निश्चयेन । लेशतः—स्वल्पत्वेन । पुनः—तु । उक्तम्—निरूपितम् । एव—खलु । अथवा—एवशब्दोऽप्यर्थे पुनर्निरूपितमपि न दोषत्वेनावगन्तव्यमिति भावः ॥ ५६ ॥

अतः स्याद्वादनीत्यैव, परिणामिनि बोद्धरि ।
तथा चित्रस्वभावे च, सर्वं बन्धादि युज्यते ॥ ५७ ॥

(अन्वय) अतः, स्याद्वादनीत्या, एव, परिणामिनि, तथा, बोद्धरि, च, चित्रस्वभावे, सर्वम्, बन्धादि, युज्यते ॥

वृत्ति —अत्र–यस्मादेकान्तेन बन्धमोक्षव्यवस्था नोपपद्यते तस्मादित्यर्थ । स्याद्वादनीत्या–अनेकान्तवादानुसारेण । एव–खलु । परिणामिनि–परिणामवति जीवे । तथा–समुच्चये । बोद्धरि–ज्ञानवति चेतने । च–पुन । चित्रस्वभावे–भिन्नभिन्न स्वभाववति । सर्वम्–निखिलम् । बन्धादि–बन्धमोक्षव्यवस्थानम् । युज्यते–उपपद्यते ॥ ५७ ॥

य एव बध्यते जीवो, मिथ्यात्वादिसमन्वित
कर्मणा मुच्यते सम्य-क्त्वादियुक्त'स एव हि ॥ ५८॥

(अन्वय ) य , एव, जीव , मिथ्यात्वादिसमन्वित , (सन्) बध्यते, हि, स , एव, सम्यक्त्वादियुक्त , कर्मणा, मुच्यते ॥

वृत्ति —बुद्धिविषयीभूत । एव–खलु । जीव –आत्मा । मिथ्यात्वादिसमन्वित –मिथ्याज्ञानसवलित (सन्) बध्यते–बन्ध नीयते । स –मिथ्याज्ञानप्रयोज्यबन्धनवान् । एव अप्यर्थक । हि निश्चयेन । सम्यक्त्वादियुक्त –भिन्नस्वभावतया सम्यग्ज्ञानादि मान् । जीव इति शेष । कर्मणा–बन्धप्रयोजकज्ञानावरणीयादि कर्मणा । मुच्यते–मुक्तो भवति ॥ ५८ ॥

बद्धोऽहमिति निर्वेदात्, प्रवृत्तिरपि युज्यते ।
परिणामित्वतस्तस्य, तत्क्षयाय कदाचन ॥ ५९ ॥

(अन्वय ) तस्य–चेतनस्य । "अह बद्ध" इति, निर्वेदात्, परिणामित्वत , तत्क्षयाय, कदाचन, प्रवृत्ति , अपि, युज्यते ॥

वृत्ति —तस्य–चेतनस्य । "अह बद्ध "–ससरणात्मकबन्ध नवानहमस्मि इति–आत्मबुद्धितो । निर्वेदात्–वैराग्यात् । परिणा

मिरत -परिणामति । प्रकृतिज्ञ ययोघे प्रकारीभूतत्वेन भाव पदार्थत्वात्। तत्क्षयाय-कर्मक्षयहेतवे। कदाचन-कदाचित्। प्रवृत्ति -धर्मादिनिमित्तकयत्नविशेष । युज्यते-उपपद्यते ॥ ५९ ॥

तप सयमयोगेषु, कर्मबन्धदवाग्निषु ।
प्रवृत्तौ तत्क्षयाच्छुद्धिर्मोक्षश्चानुपचारत ॥ ६० ॥

( अन्वय ) कर्मबन्धदवाग्निषु, तप सयमयोगेषु प्रवृत्तौ, तत्क्षयात्, शुद्धि, च, अनुपचारत, मोक्ष ।

वृत्ति -कर्मबन्धदवाग्निषु-कर्मजनितो बन्ध कर्मबन्ध स एव दवो वनतत्र-अग्नयोऽनला कर्मबन्धदवाग्नयस्तेषु तथा। तप सयमयोगेषु-तप सयमयोर्योगा सम्बन्धास्तप सयमयोगास्तेषु तथा। प्रवृत्तौ-प्रवृत्तिनिमित्तम् । तत्क्षयात्-कर्मबन्धक्षयात् । शुद्धि-सात्त्विकभाव । विशुद्धिरितियावत्। च-पुन । अनुपचारत-वस्तुत । मोक्ष-महानन्द, मुक्तिरिति यावत् । सम्पद्यते इति शेष ॥ ६० ॥

स तादृक् किं न निर्वेदात्, सर्वेषामेव देहिनाम ।
युगपज्जायते किं च, कदाचित् कस्यचिन्ननु ? ॥ ६१ ॥

( अन्वय ) तादृक्, स, निर्वेदात्, सर्वेषाम्, एव, देहिनाम्, युगपत् ननु, किम्, न, जायते, च, कस्यचित्, कदाचित्, किम्, ?

वृत्ति —तादृक्-तादृश । स -मोक्ष । निर्वेदात्-वैराग्यात्। सर्वेषाम्-निखिलानाम्। एव-अवधारणम्। देहिनाम्-प्राणिनाम्।

युगपत्-एककालावच्छेदेन । ननु-निश्चयेन । किम्-कथम् । न-नहि । जायते-भवति । च-पुन । कस्यचित्-विरलस्य जनस्य । कदाचित्-जातुचित्, किम्-कथम् । जायते इति शेष ॥ ६१ ॥

अनादिभव्यभावस्य, तथाभावत्वतस्तथा ।
कर्मयोगाच्च निर्वेदः, स तादृक् न सदैव हि ॥ ६२ ॥

(अन्वय) अनादिभव्यभावस्य, तथा, तथाभावत्वत, च, कर्मयोगात्, निर्वेद, स, तादृक्, सदैव, न,

वृत्ति —अनादिभव्यभावस्य-अनादिकालिकभव्यभावनावत । तथा समुच्चये । तथाभावत्वत -अनादिकालिकभव्यत्वत । च-पुन । कर्मयोगात्-सुकर्मसम्बन्धात् । निर्वेद -वैराग्यम् । जायते इति शेष । तादृक्-तादृश । स-निर्वेद । हि-निश्चयेन । सदैव-सर्वदैव । न-नहि ॥ ६२ ॥

स्यादनेकान्तवादेऽपि, स स्यात् सर्वज्ञ इत्यपि ।
न्याय्यमापद्यते तेन, सोऽपि नैकान्तसुन्दरः ॥ ६३ ॥

(अन्वय) स्यादनेकान्तवादे, अपि, स, सर्वज्ञ स्यात् इत्यपि, न्याय्यम्, आपद्यते, तेन, स, अपि, एकान्तसुन्दर, न ॥

वृत्ति —स्यादनेकान्तवादे-स्यात्पदलाञ्छितानेकान्तसिद्धान्ते । अपि-खलु । स-बुद्धिविषयीभूत । सर्वज्ञ-सर्वज्ञपदवाच्य । स्यात्-भवेत् । इत्यपि-इतीदमपि । न्याय्यम्-न्यायानपेत यथा स्यात्तथा । आपद्यते-आपत्तिं भजते । तेन-हेतुना । स-बुद्धिविषयीभूत सर्वज्ञ । अपि-खलु । एकान्तसुन्दर- अत्यन्त समीचीन । न-नहि ॥ ६३ ॥

स्वगतेनैव सर्वज्ञः, सर्वज्ञत्वेन वर्तते ।
न च परगतेनापि, स स इत्युपपद्यते ॥ ६४ ॥

(अन्वय) स्वगतेनैव, सर्वज्ञत्वेन, च, सर्वज्ञ, न परगतेन, अपि, (सर्वज्ञ) स इति, उपपद्यते ॥

वृत्ति —स्वगतेन स्वस्थितेन, स्वीयेनेतियावत् । एव-खलु । सर्वज्ञत्वेन-सकलविषयज्ञातृत्वेन । च-बुद्धिविषयीभूत । सर्वज्ञ । सर्वज्ञपदवाच्य । न-नहि । परगतेन अन्यजनवर्तिना । अपि-खलु । (सर्वज्ञ) भवतीतिशेष । स-बुद्धिविषयभूत । सर्वज्ञ-सर्वज्ञपदवाच्य । इति-एवम् । उपपद्यते-युज्यते ॥ ६४ ॥

अन्यथाऽन्यगतेनापि, वर्तनात्वेन सोऽन्यवत् ।
अन्य स्यादित्यनेकान्ता-देव तद्भावसंस्थितिः ॥ ६५ ॥

(अन्वय) अन्यथा, अन्यगतेन, अपि, वर्तनात्वेन, स, अन्यवत्, अन्य, स्यात्, इति, अनेकान्तात्, एव, तद्भाव संस्थिति ॥

वृत्ति —अन्यथा-सर्वज्ञ स्वगतेनैव सर्वज्ञत्वेन वर्तते न परगतेनेत्यस्यास्वीकारे । अन्यगतेन-भिन्नवस्तुस्थितेन । अपि-खलु । वर्तनात्वेन-धर्मविशेषेण । स-सर्वज्ञ । अन्यवत्-पराश्रयवत् । अन्य-सर्वज्ञभिन्न । स्यात्-भवेत् । घटो यथा पटगतेन पटत्वे नान्यो भवति न तु घटस्तथा सर्वज्ञोऽपि अन्यगतेन धर्मेणासर्वज्ञ स्यादिति भाव । इति-अस्माद्धेतो । अनेकान्तात्-अनेकान्तवाद-स्वीकारात् । एव-खलु । तद्भावसंस्थिति

सर्वज्ञोऽनेकान्तवादादेव सिद्ध्यति नत्वेकान्तवादात्, एकान्तवादे बन्धमोक्षाद्यव्यवस्थानस्य प्रागावेदनादनेकान्तवादस्य स्वीकरणीयत्वादिति भाव ॥ ६५ ॥

अन्येषामिव भावना, स्वसत्ता तद्बलादत. ।
अत. संचिन्त्यता सम्यक्, कथं नैकान्तसुन्दर. ॥ ६६ ॥

(अन्वय) यत, तद्बलात, अन्येषाम्, भावानाम्, इव, स्वसत्ता, अत, एकान्तसुन्दर, सम्यक्, कथम्, न, संचिन्त्यताम् ॥

वृत्ति —यत –यस्माद्धेतो । तद्बलात्–बुद्धिविषयीभूतानेकान्तवादबलात् । अन्येषाम्–अपरेषाम् घटपटादिपदार्थानाम् । इव–यथा । स्वसत्ता–निजस्थिति । यथाऽनेकान्तवादबलात् घटपटादीनामखिलाना पदार्थाना स्वस्वसत्ता तथा तद्बलादेव सर्वज्ञस्यापि स्वसत्ता सिद्ध्यतीति भाव । अत –अस्माद्धेतो । एकान्तसुन्दर – अत्यन्तमनोहर । सर्वज्ञ इति शेष । सम्यक् समीचीनतया । कथम्–केन प्रकारेण केन हेतुनेति यावत् । न–नहि । संचिन्त्यताम्–चिन्तनविषयीक्रियताम्, विचार्य्यतामिति यावत् ॥ ६६ ॥

एवञ्च सिद्ध सर्वज्ञ–स्तद्वाक्याज्जिन एव तु ।
तस्मादल प्रसङ्गेन, सिद्धार्था हि यतो वयम् ॥ ६७ ॥

(अन्वय) एवञ्च, सर्वज्ञ, सिद्ध, तु, तद्वाक्यात्, जिन, एव, (सर्वज्ञ) हि, यत, वयम्, सिद्धार्था, तस्मात्, प्रसङ्गेन, अलम् ॥

वृत्ति —एवञ्च-सर्वज्ञसाधकयुक्तितिप्रकाशनात्मकेन प्रकारेण तु। सर्वज्ञ –कालत्रितयाबाधितसर्वविषयकज्ञानवान् सर्वज्ञपद वाच्य। सिद्ध –निष्पन्न। तु पुन। तद्वाक्यात्-बुद्धिविषयी भूतसर्वज्ञप्रतिपादितशब्दत। जिन –तीर्थंकृत्। एव-खलु। सर्वज्ञो नान्य कश्चित्तदतिरिक्त इति। हि-निश्चयेन। यत-यस्माद्धेतो, वयम्-मद्दक्षणा आर्हता। सिद्धार्था -निष्पन्नप्रयोजना। सञ्जाता इति शेषा। तस्मात्-तेन हेतुना। प्रसङ्गेन-सर्वज्ञ साधकाकारितियुक्तितिप्रसञ्जनेन। अलम् व्यर्थम्। न तत्सिद्धि विषये किमपि वक्तव्यमवशिष्यते इति भाव ॥ ६७॥

परमशिष्टशिरोमणि सूरिराट्-शिष्टपरम्पराप्राप्त प्रशस्ते मङ्गलमातनुते—

> कृत्वा प्रदः, प्रकरण भुवनैकसार,
> सर्वज्ञरत्नगतमोहविनाशहेतु।
> यत्पुण्यमर्जितमनेन समस्तपुसा
> मात्सर्य्यदु खविरहेण गुणानुरागः ॥ ६८॥

(अन्वय) हि, भुवनैकसारम्, सर्वज्ञरत्नगतमोहविनाशहेतु, प्रद, प्रकरणम्, कृत्वा, यत, पुण्यम्, अर्जितम्, मात्सर्य्यदु ख विरहेण अनेन, समस्तपुसाम्, गुणानुराग (जायताम्) ॥

वृत्ति —हि-निश्चयेन। भुवनैकसारम् एक सजातीयद्वितीय रहित च सारं श्रेष्ठमेकसारम्, भुवनेषु लोकेषु एकसारं भुवनैक सारम भुवनत्रितयप्रधानमित्यर्थ। सर्वज्ञरत्नगतमोहविनाशहेतु। सर्वज्ञो रत्नमिवेति सर्वज्ञरत्नम् तद्गत प्राप्तश्चासौ

सर्वज्ञरत्नगतमोह तस्य विनाशे–विध्वसने हेतव कारणानि सर्वज्ञसाधकयुक्तिकदम्बकरूपाणि यत्र तत्तथा । अद –एतत् । प्रकरणम् ग्रन्थविशेषम् । कृत्वा–विरचय्य । यत् यादृशम्, यावदित्यर्थ । पुण्यम्–सुकृतम् । अर्जितम्–समासादितम् । "सर्वज्ञरत्नागतमोहविनाशहेतु" इति पाठे सर्वज्ञरत्नगतमोह विनाशहेतुत्वमिति पुण्यविशेषणतयाऽवसेयम् । तदा–सर्वज्ञरत्न मिवेति सर्वज्ञरत्नम्, तद्गतो मोहोऽज्ञान सर्वज्ञरत्नगतमोहस्तस्य विनाशे विध्वसने हेतु कारणरूपं तथा । इत्येव व्याख्येयम् । मात्सर्यदु खविरहेण–मात्सर्यजनित दु ख मात्सर्यदु ख तेन विरहो वियोगो यस्मात्तेन तथा मात्सर्यजनितदु खविध्वसकेनेत्यर्थ । अनेन–बुद्धिविषयीभूतेन तेन पुण्येन । समस्तपुमाम्– समस्ता निखिलाश्च ते पुमास पुरुषा मनुष्या इति यावत् समस्तपुम स्तेषां तथा, सर्वभव्यात्मनामिति यावत् । गुणानुराग — गुणेषु– समस्तशास्त्रकदम्बकावगाहनजनितविचित्रवैदुष्यादिषु अनुराग प्रेम स्नेहो वा गुणानुराग । जायतामितिशेष । न तु कदाचिदपि दोषे दृष्टिपातोऽपीति भाव ॥

इति सुविहिताग्रणी–सुगृहीतनामधेय परमदार्शनिकाऽऽचार्यपुरन्दर श्रीहरिभद्रसूरीश्वरविरचितायां "सर्वज्ञसिद्धौ" शास्त्रविशारद कविरत्न पीयूषपाणि पूज्यपादाचार्यमहाराज श्रीविजयामृतसूरीश्वरकृता 'सर्वहिताऽऽख्या' व्याख्या समाप्ता ॥ सपूर्णश्चाय ग्रन्थ ।

ॐ ह्रीँ अर्हं नमः ॥

# अथ प्रशस्ति

( १ )

आद्यस्तीर्थपतिर्वृषाङ्किततनुर्देवाधिदेवोऽभवत् ,
शान्ति शान्तिनिशान्तशान्तघनिनो विश्वैकविश्वेश्वर
नमिर्ब्रह्मबलोऽस्खलात्मशमदः पार्श्व स्मपार्श्व प्रभु-
र्वीरोऽप्यपि जिनाधिपा सुकृतिनां कुर्वन्तु सत्कामितम ॥

( २ )

यल्लोकोत्तरशासनं भवजले, पोतायमानं नृणां,
यज्ज्ञानं भुवनायमानमसहं मोहान्धकारापहम् ।
यत्पादार्चनतो जगन्ति परमां सम्प्राप्नुवन्ति श्रिय,
स स्वामी त्रिशलात्मजो विजयतां श्री वर्धमानो जिन ॥

( ३ )

तत्पट्टोदयभास्कर समभवत्स्वामी सुधर्मा गणी,
जम्बूथे स जगत्त्रयोपकरणीं श्रीद्वादशाङ्गीं वराम् ।
तत्पट्टेऽजनि चारुचित्रचरितो ब्रह्मैकनिष्ठो गुरु-
र्जम्बूस्वामिमुनीश्वरोऽमितमति[१] पूज्योऽन्तिम केवली ॥

( ४ )

स्वामाश्रीप्रभव प्रभूतमहिमस्तत्पट्टभृद् विद्वर ,
स्याद्वादाम्बुजबोधनेऽह्निमकरो जातं मतामग्रणी ।
श्रीशय्यम्भवसूरिराट् समभवद् विस्फारकीर्तिस्ततं ,
सूनोः श्रीमनकस्य शनिधिदशाद्वैकालिकं विस्तृतम् ॥

---

१ धर्मादित्यर्थ ।

(५)

इत्येव जिनधर्मकल्पलतिकासेकाम्बुवाहोपमा,
गच्छे सूरिवरा शुभेऽष्ट प्रथमे निर्ग्रन्थसञ्ज्ञेऽभवन् ।
श्रीमत्कोटिगणे तत समभवन् श्रीसुस्थिताद्या बुधा,
ये नि श्रेयससाधक जिनमत ह्युच्चै समादिक्षत ॥

(६)

श्रीचन्द्राभिधसूरिराड्दभवच्छ्रीचन्द्रगच्छेऽमले,
यस्याश्चर्यकर निशम्य चरित चित्रीयते नैव क ।
जाता श्रीवनवासिगच्छगगनप्रद्योतना सूरय,
श्रीसामन्तमुखा प्रशस्तयशस प्राज्ञोत्तमा द्वादश ॥

(७)

अष्टौ श्रीसर्वदेव-प्रभृतिसुकृतिन सूरिवर्या वटाऽऽख्ये
गच्छे स्वच्छे विशालोऽजनिषत शमिना शेखरा सच्चरित्रा ।
भव्याम्भोजप्रबोधे दिनकर इव य सत्तपागच्छधुर्यो,
जातस्तुण्यप्रभावोऽजनि जगति जगच्चन्द्रसूरीश्वर स

(८)

सोमप्रभ सूरिवरो गुणाकर, प्रभाविसूरीश्वरसोमसुन्दर ।
विद्वद्वरेण्यो मुनिसुन्दर शमी, श्रीहीरसूरिर्नृपतिप्रबोधक ॥

(९)

श्रीसेन-देव-प्रमुखा कुवासना-विषापहज्जाङ्गुलिमन्त्रसन्निभा ।
सूरीश्वरा आर्हतशासने परे, चकासति स्म प्रशमाद्यलङ्कृता ॥

(१०)

उपस्थित पट्टपरम्परात, श्री वृद्धिचन्द्र श्रमणाग्रतस ।
य सौम्यमूर्ति सरलात्मवृत्ति महीयसा मान्यतमो महात्मा ॥

( ११ )

अमृतेषा पट्टे निरुपमगुणो ब्रह्मनिलय–
स्तपागच्छाधीश सुरगुरुरिवाशेषनिगमे ।
क्षमाधीशो पूज्य सुविहितवर सूरिमुकुटो,
रतस्तीर्थोद्धारे मुनिगणनतो नेमिगुरुक ॥

( १२ )

तत्पट्टाम्बरभास्करो मधुरवाक् पीयूषपाणि कवि–
र्धीमाञ्छास्त्रविशारदो जिनमतप्रख्यापक सर्वत ।
न्यायव्याकृतिदर्शनादिनिपुणो व्याख्यानवाचस्पति,
सूरि श्रीविजयामृतो विजयतऽनल्पातिषत्संस्तुत ॥

( १३ )

य षड्दर्शनसागर वरमति प्रोन्मथ्य मन्थाद्रिवद्,
४ ४ ४ १
वेदाब्ध्यङ्गशशाङ्कसङ्ख्यकमहाग्रन्थान् व्यधादद्भुतान् ।
नद्य सिन्धुमिवाविशंश्च निखिला विद्या यमाप्तोत्तम,
स श्रीमान् हरिभद्रसूरिभगवाञ्जातो जगद्भूषणम् ॥

( १४ )

ये केचित्कुमतान्धकारविगलत्तत्त्वार्थसद्दृष्टय,
सपक्ष नहि मन्यतऽपरहित विश्वत्रयालोकिनम् ।
तथा बोधकृते कृतार्थवचन सूरीश्वर सहयो,
निरपष्टामकरोत् कृति सुधहिता सर्वज्ञसिद्धयाख्यिकाम् ॥

( १५ )

वृत्त्या विना नैव तदर्थबोध, कर्तुं समर्थोऽपि भवेत्समर्थ ।
चित्त विमृश्येति चकार वृत्ति, सूर्यमृत सर्वहिताभिधानाम् ॥

(१६)

वृत्ति स्फुटार्थां परिचीय भव्या, सर्वज्ञदेवे दृढभक्तिभावा ।
भजन्तु पश्यन्तु निजात्मरूप, मुक्ति लभन्ता च विधूतपङ्का ॥

(१७)

९ १ ० २
ग्रहचन्द्रवियन्नेत्रे, वर्षे विक्रमतोऽथ दादराभिख्ये ।
मुम्बापुर्युपनगरे, शान्तिजिनोपाश्रये रम्ये ॥

(१८)

चातुर्मास्ये सैषा, वृत्ति सम्पूर्णता समापादि ।
कार्तिकमासे श्रीमद्-विजयामृतसूरिणा कृतिना ॥

(१९)

चन्द्रार्काबुदयेते यावत् खे तावदेव वृत्तिरियम् ।
सद्भि सुपठ्यमाना, नन्दतु विश्वेऽत्र निरपाया ॥

(२०)

छाद्मस्थ्येन कृतौ या, क्षतय स्युस्ताश्च सज्जनैर्मृग्या ।
प्रकृतिरियं तेषां वा, न च लोकेऽपेक्षतेऽनुनयम् ॥

(२१)

आरच्यैमां वृत्ति, यदत्र कुशलाद्रिक समालब्धम् ।
तेन हि भव्यो लोक, प्राप्नोत्वचिरेण भवविरहम् ॥

(२२)

वृत्तेर्विधातुर्विनयाञ्चितस्य, शिष्यस्य देवाभिधया श्रुतस्य ।
धन्यामधाम्नोऽन्तिषदाऽत्र भान-चन्द्रेऽरितभावे यह्वा विभागे ॥

(२३)

आचार्यमेरुप्रभसूरिण सन्निधानमासाद्य कृपा च भूय ।
श्रीहेमचन्द्रेण कृता प्रशस्ति, भूयात् सदा सम्मददा बुधानाम् ॥

॥ श्रेयो भूयाच्छ्रीश्रमणसङ्घस्य ॥

( १६ )

वृत्ति स्फुटार्थां परिचीय भव्या, सर्वज्ञदेवे ।
भयन्तु पश्यन्तु निजस्वरूप, मुक्ति लभन्ता

( १७ )

महच द्रविधर्मेत्रे, वर्षे विक्रमतोऽथ
मुम्बापुर्युपनगरे, शान्तिनिनोपाश्रये

( १८ )

चातुर्मास्ये सैपा, वत्ति सम्पूर्णता
कार्तिकमासे श्रीमद्-विजयामृतसूरिणा

( १९ )

चन्द्रार्काबुदयेते, यावत् खे तावदेव
सद्भि सुपठयमाना, न दतु विश्वेऽत्र

( २० )

छाद्मस्थ्येन कृतौ या, क्षतय स्युस्ताः
प्रकृतिरिय तेषा वा, न च लोकेऽपे

( २१ )

आरच्चैमा वृत्ति, यदत्र कुशलादिक
तेन हि भव्यो लोक, प्राप्नोत्वचिरेण

( २२ )

वृत्तिर्विधातुर्विनयाञ्चितस्य, शिष्यस्य देवा
पन्यासधाम्नोऽन्तिषदाऽत्र भाव-प्रज्ञेऽरितभा

( २३ )

आचार्यमेरुप्रभसूरिण स-न्निधानमासाद्य
श्रीहेमचन्द्रेण कृता प्रशस्ति, भूयात् सदा सम

॥ श्रेयो भूयाच्छ्रीश्रमणसङ्घस्य